※ श्री· ※

# अमरकोशप्रथमकाण्डश्लोकसंख्या।

| पृष्ठाङ्का. | वर्गाङ्का. | वर्गनाम | श्लोकसंख्या |
|---|---|---|---|
| १—२२ | १ | स्वर्गवर्गें | ७५ |
| २२—२३ | २ | व्योमवर्गें | २॥ |
| २३—३४ | ३ | दिग्वर्गें | ३५ |
| ३४—४३ | ४ | कालवर्गें | ३१ |
| ४३—४८ | ५ | धीवर्गें | १७ |
| ४९—५६ | ६ | शब्दादिवर्गें | २५॥ |
| ५६—६५ | ७ | नाट्यवर्गें | ३८ |
| ६६—६८ | ८ | पातालभोगिवर्गें | ११ |
| ६८—६९ | ९ | नरकवर्गें | ३॥ |
| ६९—८१ | १० | वारिवर्गें | ४५ |

सङ्कलने १० वर्गाः, श्लोकाः २८३॥

क्षेपकैः सह ३००

# अमरकोशे द्वितीयकाण्डे

* श्लोकादिसंख्या *

| पृष्ठाङ्का | वर्गाङ्का | वर्गनाम | श्लोका |
|---|---|---|---|
| ८२—८७ | १ | भूमिवर्गें | १९ |

---

तृतीयकाण्डे श्लोकादिसंख्या

❀ श्री. ❀

# किञ्चिद्वाचिकम्—

अष्टाध्यायी जगन्माता अमरकोशो जगत्पिता ।

संस्कृत साहित्य में कोश का स्थान बहुत ऊँचा है, क्योंकि प्रत्येक वाक्य के प्रयोग में पहिले ही लिङ्ग और अर्थ का ज्ञान आवश्यक होता है। अतः विद्वानों और संस्कृत प्रेमियों के लिए कोश-ज्ञान सर्व प्रथम आवश्यक है ।

कोशों मे—'अमरकोश का बहुत प्रचार है, कारण थोड़े में ही पर्याय--लिङ्ग और नानार्थ आदि का ज्ञान अमरकोश से बहुत सरलता से हो जाता है । इसी लिए अक्षरोच्चारण के योग्य होते ही ब्राह्मण बालकों को **अमरकोश** कण्ठ कराया जाने लगता है ।

इस प्रकार जगत्प्रसिद्ध सर्वोपयोगी **अमरकोश** का विशद सुन्दर सटीक और सस्ता संस्करण अभीतक नहीं था, इसलिए सरल और उपयोगी 'अभिनवराजलक्ष्मी' टीका सहित यह अमरकोश का गुटका संस्करण प्रस्तुत किया गया है । सन्दिग्ध स्थलोंमे भी आपको अब बड़ी २ टीकाओं के उलटने की जरूरत नहीं है, केवल इस संक्षिप्त टीका से ही आपका कार्य चल सकेगा।

## विशेषता—

इस टीका मे—शब्दो का प्रायः असली रूप और लिङ्ग ये सब स्पष्ट रूप से समझाये गये है—यह बात आप टीका देखकर ही जान सकेंगे।

हमारा विश्वास है कि 'अभिनवराजलक्ष्मी' सहित **अमरकोश** का यह गुटका संस्करण छात्रो को तथा विद्वानो को बड़ा लाभप्रद होगा।

| संस्कृतसाहित्यसेवी मात्रको 'अमरकोश' अवश्य कण्ठस्थ करना चाहिए। |
|---|

श्रीराजस्थानसंस्कृतकालेज,
मीरघाट, काशी।
वैशाखपूर्णिमा १९९२

निवेदक—
श्रीगुरुप्रसादशास्त्री।



स्वर्गीय-पं० रघुनन्दनशास्त्री, आयुर्वेदाचार्य ।



पण्डितराज-श्री १०८ स्नेहिरामजीशास्त्रिणः

॥ श्रीः ॥

अभिनवराजलक्ष्म्याऽलङ्कृतः—

# अमरकोशः

## प्रथमकाण्डम् ।

**यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः ।**
**सेव्यतामक्षयो धीराः स श्रिये चामृताय च ॥१॥**

---

### ॥ अभिनवराजलक्ष्मीः ॥

वन्देऽनवद्यसद्ग्रन्थविद्योद्योतितदिङ्मुखान् ॥
मरुमण्डलमार्त्तण्डस्नेहिरामाभिधान् गुरून् ॥१॥

यस्येति । हे धीराः = विद्वांसः । 'कृतिकृष्टयमिरूपधीराः' इति नाममाला । अव्ययः = अनादिरनन्तः, सः = भगवान् शिवः, सेव्यताम्, 'भवद्भि'-रिति शेषः, यस्य—अगाधस्य = अनवच्छिन्नमहिमातिशयस्य, [ ज्ञानञ्च दया च—ज्ञानदये, ज्ञानदययोः सिन्धुरिव सिन्धुः—तस्य—] ज्ञानदयासिन्धोः = ज्ञान-

**समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।**
**संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥**

सागरस्य, दयानिधेश्च, अनघा = मनोहरा, पवित्राश्च, क्षमाशान्त्यैश्वर्यादयो- गुणाः सन्ति । कस्मै प्रयोजनाय सेव्यतामित्यत आह—श्रिये = कल्याणाय, त्रिवर्गसुखाय, अमृताय = मोक्षाय च । यद्वा—हे अनघा. ! भवद्भिः स धीरः सेव्यताम् । धियं = ज्ञानं राति = ददातीति धीरः = ज्ञानप्रदः, शिवः, श्रिये = सकलसुखसम्पत्तये, अमृताय च = मोक्षाय च । यद्वा—'यस्ये' त्यत्र 'इको यणचो'त्यनेन कृतयणादेशस्य ईकारस्य प्रश्लेषः, (ई-अस्येति प्रश्लेष) अस्य = शिवस्य, ई = लक्ष्मीः, अनघा =पवित्रा गुणाश्च सन्ति, अत स प्रसन्नो भगवाञ्छिवो युष्मभ्यं भोगमोक्षलक्ष्मीं कृपया दास्यतीति भावः । ज्ञायतेऽनेन ज्ञानं = शास्त्रं, दया=निरुपाधि परदुःखदानेच्छा, तयोः सागरस्ये- वागाधस्य, यतः कारुणिकात् सर्वा विद्या प्रादुर्भवन्तीत्यर्थः । कथम्भूत स – अक्षयः=नित्यशुद्धबुद्धसच्चिदानन्दरूपः—इत्यर्थ —इति सङ्क्षेपः ॥१॥

समाहृत्येति—अन्येषां = व्याडि-वाचस्पत्यादीनां, तन्त्राणि = नाम लिङ्गानुशासनानि, सिद्धान्तांश्च, समाहृत्य=संगृह्य, [नामानि च लिङ्गानि च- नामलिङ्गानि, तानि अनुशिष्यन्ते-विविच्य बोध्यन्तेऽनेन— अस्मिन् वा, तत्-] नामलिङ्गानुशासनं, (अमरकोशः-) संक्षिप्तैः = स्वल्पशब्दैः, प्रतिसंस्कृतैः=यथा योग्यं स्थापितैः—रचनाचातुरीमनोहरैः, वर्गैः = प्रकरणैः—युक्तम्, अत एव-

**प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित् ।**
**स्त्रीपुन्नपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ॥३॥**

सम्पूर्ण=साङ्गोपाङ्ग मया—अमरसिंहेन—उच्यते, 'बालानामुपकाराये'ति शेष. ॥ २ ॥

प्रायश इति—अत्र—नामलिङ्गानुशासने—अमरकोशे—प्रायश· = बाहुल्येन, रूपभेदेन = टाप्–ङीप्–विसर्गानुस्वारादिविशेषैः—स्त्री पु–नपुसक ज्ञेयम्, क्वचिच्च तद्विशेषविधे.—स्त्रीपुंनपुसक–ज्ञेयमित्यर्थः ।

(१) तत्र रूपभेदेन यथा–'लक्ष्मी. पद्मालया पद्मा' 'पिनाकोऽजगव धनु·' । विशेषणपदस्थेन, सर्वनामपदस्थेन वा रूपभेदेनापि क्वचिल्लिङ्गनिर्णयः कार्य·, यथा—'तत्परो हनुः', अत्र 'तत्पर' इति विशेषणात् 'हनु'शब्दस्य पुंस्त्वं निर्णीयते । एव—'कुतू कृत्ते स्नेहपात्र सैवाल्पा कुतुप पुमा'नित्यत्र 'सा' इति सर्वनामलिङ्गदर्शनात्कुतूशब्दस्य स्त्रीलिङ्गता । (२) रूपभेदाभावेपि निश्चितलिङ्गशब्दसाहचर्याल्लिङ्गनिर्णयो यथा—'अश्वयुगश्विनी' 'भानु करो मरीचि. स्त्रीपुंसयो' 'वियद्विष्णुपदम्'–इति । अत्र–अश्विनी कर·विष्णुपद-साहचर्यात्—अश्वयुक्—भानु–वियच्छब्दाना स्त्रीत्वं, पुंस्त्व, क्लीबत्वञ्च यथायथं बोध्यम् ।

तद्विशेषविधे.–तस्य = स्त्रीपुनपुंसकस्य, वचनस्य च–विशेषविधेः =

**भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः ।**
**कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥४॥**

विशिष्योपादानात् निर्णयो यथा—'भेरी स्त्री दुन्दुभिः पुमान्' 'मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' 'गृहाः पुंसि तु भूम्न्येव' इत्यादौ ॥३॥

भेदेति । अत्र = कोशे, अनुक्तानां = स्वस्वपर्यायेषु स्थानान्तरेऽपठितानां भिन्नं लिङ्गं येषां तेषां—भिन्नलिङ्गानां शब्दानां—भेदाख्यानाय = लिङ्गभेदं प्रदर्शयितुं—द्वन्द्वः, एकशेषश्च न कृतः, तथाहि—'देवताऽमराः' इति द्वन्द्वेन न पठितं, तथा सति हि लिङ्गभेदनियमो न स्यात् । एवं 'खं नभः श्रावणो नभाः' इत्यत्र 'खश्रावणौ तु नभसी' इत्येकशेषो न कृतः। समानलिङ्गानान्तु लिङ्गभेदाभावात् द्वन्द्वैकशेषौ कृतावेव, यथा—'स्वर्गनामसु—त्रिदिवत्रिदशालयाः' इति, 'पादा रश्म्यङ्घ्रितुर्यांशाः'—इत्यादौ च ।

स्थानान्तरे स्वस्वपर्यायेषु निर्दिष्टानान्तु—भिन्नलिङ्गानामपि—द्वन्द्वैकशेषावत्र कोशे कृतावेव—यथा—'अप्सरोयक्षरक्षोगन्धर्वकिन्नराः' इत्यत्र स्वस्वपर्यायप्रक्रमे 'नैर्ऋतो यातुरक्षसी' 'स्त्रियां बहुष्वप्सरसः' इत्यादिना निर्दिष्टानां यत्राप्सरोरक्षआदीनां द्वन्द्वेनात्र निर्देशः ।

एवं—'मातापितरौ' इत्यत्र मातृशब्दस्य पितृशब्दस्य च 'जनयित्री प्रसूर्माता' 'तातस्तु जनकः पिता' इत्यादिना स्वस्वपर्यायप्रक्रमे निर्दिष्टलिङ्गतया ऽत्रैकशेषेण निर्देशः कृतः—'पितरौ' इति ।

**त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।**
**निषिद्धलिङ्गं शेषार्थं, त्वन्ताथादि न पूर्वभाक् ॥५॥**

किञ्चात्र कोशे—क्रमादृते = क्रम विना (प्रसङ्ग विना) सङ्करो न कृत । भिन्नलिङ्गाना मेलनं सङ्करः । यथा—'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यत्र 'स्तवः' इति पुल्लिङ्गमुक्त्वा 'स्तोत्र'मिति नपुंसकलिङ्गमुक्त्वा 'नुति. स्तुति'रिति स्त्रीलिङ्गनिर्देशः, न तु 'स्तुति स्तोत्रं नुति स्तव' इति सङ्कर. कृत. । यथा वा—'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव' इत्यत्र क्लीवस्त्रीपुलिङ्गानां क्रमेणैव. निर्देशो—न सङ्कर. ।

प्रसङ्गेन तु स्त्रीपुंनपुसकानां सङ्कर कृत एव, यथा—स्वर्गप्रक्रमे-'द्योदिवौ' भिन्नलिङ्गे अपि स्वर्गपर्यायप्रसङ्गान्निर्दिष्टे ॥ ४ ॥

त्रयाणां लिङ्गाना समाहारस्त्रिलिङ्गी, तस्या—त्रिलिङ्ग्यां—'त्रिषु' इति पदं ज्ञेयम्, यथा—'त्रिषु स्फुलिङ्गोऽग्निकण' । मिथुने तु = स्त्रीपुंसयोस्तु, 'द्वयोः' इति पदं बोध्य, यथा—'द्वयो. प्रणाली पयस.' ।

निषिद्धं लिङ्गं यस्य तत्—निषिद्धलिङ्ग पदं—शेषार्थं = शेषलिङ्गं बोध्य, यथा—'वज्रमस्त्री स्यात्' । 'तु'शब्दोऽन्ते यस्य—तत्—त्वन्तम्, 'अथ' शब्द आदिर्यस्य—तत्—अथादि, त्वन्तञ्च अथादि च—नामपद, लिङ्गपद, सर्वनाम-पदमव्ययपदञ्च—पूर्वभाक् = पूर्वान्वयि न भवति, किन्तूत्तरान्वयि भवति । तत्र नामपद यथा—'नगरी त्वमरावती'—'जवोऽथ शीघ्र त्वरितम्'—इति ।

## ❀ अथ स्वर्गवर्गः ❀

[१]स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ।
सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥
[२]अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥७॥
आदितेया दिविषदो लेखा अदितिनन्दनाः ।

---

लिङ्गपद यथा—'पुंसि त्वन्तर्द्धि.' 'शस्त्र चाथ त्रिपु द्रव्ये'। सर्वनामपदं यथा—'तस्य तु प्रिया' इति। अव्ययपदं यथा—'वा तु पुंसि' इति। 'अथ'शब्दोऽथोशब्दस्याप्युपलक्षण, यथा—'अनुक्रोशोऽप्यथो हस' इति ॥५॥

❀ इति परिभाषाप्रकरणम् ❀

(१) नव नामानि स्वर्गलोकस्य, तत्र स्व.शब्दोऽव्ययम्, द्योदिवौ स्त्रियाम्, त्रिविष्टप नपुंसक, शेपा. पञ्च पुंसि। द्यौ', द्यावौ, द्याव:, द्यां, द्योभ्याम्। द्यौ, दिवौ, दिव., द्युभ्यामित्यादिरूपाणि। दिवशब्दोऽकारान्त. क्लीबलिङ्गोप्यस्ति—'मन्दर' सैरिभ. शक्रभवन खं दिवं नभ.' इति त्रिकाण्डशेषकोशात्। (२) 'अमरा' इत्यादि-(२६)-षड्विंशतिर्देवानां नामानि, तत्र देवतैव दैवतम्—इति स्वार्थिके प्रज्ञाद्यणि निष्पन्न-दैवतशब्द' पुंसि नपुंसके च, देवताशब्दस्तु स्त्रियां, शेपा., पुंसि।

आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः ॥
बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।
वृन्दारका दैवतानि पुंसि वा देवता स्त्रियाम् ॥
(१) आदित्यविश्ववसवस्तुषिताभास्वराऽनिलाः ।
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥१०॥
(२) विद्याधराऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥
(३) असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः ।

---

(१) आदित्यादयो नव–गणदेवताः = समुदायचारिण्यो देवता, तदुक्तं वाचस्पतिकोशे—

"आदित्या द्वादश प्रोक्ता, विश्वेदेवा दश स्मृताः ।
वसवश्चाष्ट संख्याता, षट्त्रिंशत्तुषिता मताः ॥
आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः (४९) ।
महाराजिकनामानो द्वे शते विंशतिस्तथा (२२०) ॥
साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः ॥" इति ।

(२) अमी = पूर्वोक्ता विद्याधरादयो दश देवयोनिभेदाः । देवा योनि–रेषान्ते–देवयोनयः = देवांशाः । (३) दश असुराणां नामानि पुंसि ।

शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः॥१२॥
[1]सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः।
समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः॥१३॥
षडभिज्ञो दशबलोऽद्वयवादी विनायकः।
मुनीन्द्रः श्रीघनः शास्ता मुनिः [2]शाक्यमुनिस्तु यः॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः।
गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः॥१५॥
[3]ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः।
हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः॥१६॥
धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः।

---

(१) अष्टादश बुद्धनामानि पुंसि, तत्र—'मारजित्—लोकजित्' शब्दौ तान्तौ। अद्वयवादी—नकारान्त। शास्तृशब्द ऋकारान्त.।

(२) सप्त शाक्यस्य—बुद्धभेदस्य—नामानि—पुंसि।

(३) 'ब्रह्मे'त्यादीनि विंशतिर्नामानि ब्रह्मणः—पुंसि। तत्र ब्रह्मपरमेष्ठिनौ—नकारान्तौ, धातृ विधातृ स्रष्टारस्त्रय ऋकारान्ता', वेधाः—सकारान्त, विश्वसृट्—जकारान्त। 'नाभिजन्मे'त्यादि नव नामानि प्रक्षिप्तानि।

स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः १७
[ नाभिजन्माण्डजः पूर्वोऽनिधनः कमलोद्भवः ।
सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः ॥ ]
विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः ।
दामोदरो हृषीकेशः केशवो माधवः स्वभूः १८॥
दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः ।
पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः॥
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः ।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ॥ २० ॥
देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः ।
वनमाली बलिध्वंसी कंसारातिरधोक्षजः ॥२१॥
विश्वम्भरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः ।
[ पुराणपुरुषो यज्ञपुरुषो नरकान्तकः ॥

(१) 'विष्णु'रित्यादीनि ऊनचत्वारिंशत्-(३९)-नामानि विष्णोर्भगवतः 'पुंसि । तत्र विष्टरश्रवाः-सकारान्तः, शार्ङ्गि-वनमालि-बलिध्वंसिनो नकारान्ताः । 'विश्वजि'त्तकारान्तः । (२) सप्त प्रक्षिप्तान्यप्यस्यैव ।

जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः । ]
(१) वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः ॥२२॥
(२) बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः ।
रेवतीरमणो रामः कामपालो हलायुधः ॥२३॥
नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली ।
संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः ॥२४॥
(३) मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।
कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ॥२५॥
शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः ॥२६॥
(४) ब्रह्मसूर्ऋश्यकेतुः स्यादनिरुद्ध उषापतिः ।

---

(१) श्रीकृष्णपितुर्वसुदेवस्य द्वे नामनी–पुंसि ।

(२) सप्तदश—१७–श्रीकृष्णाग्रजन्मनो बलभद्रस्य नामानि, तत्र 'हलि-मुसलिनौ नकारान्तौ, सर्वेऽपि पुल्लिङ्गाः ।

(३) एकविंशति (–२१–) नामानि कामदेवस्य । तत्र पुष्पधन्वा–नकारान्त, सर्वे पुल्लिङ्गाः । ऋश्यकेतुर्विश्वकेतुश्चेत्युभयथाऽपि पाठः ।

(४) नामद्वय कृष्णपौत्रस्यानिरुद्धस्य । 'ऊषापति'रित्यपि नाम ।
केचित्तु—"ब्रह्मसूर्ऋश्यकेतु स्यादनिरुद्ध उषापति"रिति चत्वारि

[1]लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ॥
[ इन्दिरा लोकमाता मा क्षीरोदतनया रमा ।
भार्गवी लोकजननी क्षीरसागरकन्यका ॥ ]
शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं[3] सुदर्शनम् ।
कौमोदकी गदा, खड्गो नन्दकः, कौस्तुभो मणिः
[ चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम्

अनिरुद्धस्य कृष्णपौत्रस्य प्रद्युम्नसूनोर्नामानि, एकोनविंशतिः पूर्वाणि नामानि तु मदनस्य—इत्याहुः । तत्र—

"उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा ।
सम्मोहनश्च कामस्य पञ्च बाणाः प्रकीर्त्तिताः ॥"

(१) चतुर्दश नामानि—लक्ष्म्याः । लक्ष्म्यादयः सर्वे—स्त्रीलिङ्गाः ।

(२) लक्ष्मीपतेर्विष्णोः शङ्खः—'पाञ्चजन्य' इति—विष्णोरायुधविशेषस्यैकं नाम । तच्च पुंसि । (३) विष्णुचक्रस्यैक नाम । तत्र सुदर्शनः—पुंसि नपुंसके च,—'सुदर्शनोऽस्त्रियां चक्रे' इति—नामनिधानकोशोक्तेः । (४) एकं विष्णुगदाया नामधेयं, तच्च स्त्रियाम् । 'कौमोदकी'त्यपि पाठः । (५) विष्णोः खड्गस्य 'नन्दक' इत्येकं नामधेयन्तच्च पुंसि । (६) लक्ष्मीपतेर्विष्णोर्मणिः—कौस्तुभः, स च पुंसि । (७) एकं विष्णुधनुषः—क्लीबे । (८) एकं विष्णुलाञ्छनस्य—पुंसि ।

[1]अश्वाश्च शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥
[2]सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः । ]
[3]गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ।
नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः॥२९॥
[4]शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।
ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः॥ ३० ॥
भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।
मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः॥
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥३२॥
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।

---

(१) विष्णुवाहनाना चत्वारि । (२) सारथि-मन्त्रि-भ्रातृणामेकैकम् ।

(३) नव विष्णुवाहनस्य गरुडस्य नामानि, तत्र–गरुत्मान्–तकारान्तः, सर्वेऽपि पुलिङ्गा ।

(४) 'शम्भु'रित्यादीन्यष्टचत्वारिंशत्—(४८)–नामानि भगवतो विश्वेश्वरस्य शिवस्य । तत्र—शूलि–पिनाकि–कपर्दि–क्रतुध्वमिनो नकारान्ता । कृत्तिवास कृशानुरेतसौ सकारान्तौ । कपालभृत् तकारान्तः । सर्वे पुल्लिङ्गा ।

हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥३३॥
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।
व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥
[ अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः । ]
[1]कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं[2] धनुः ।
[3]प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु[4] मातरः ॥
[ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ॥]
वि[5]भूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ।
[ अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥]

---

(१) अस्य—शम्भोर्जटाना, जूटः—वन्ध –कपर्द । एकं शिवजटा-भारस्य नाम, तच्च पुंसि । (२) द्वे नामनी शिवधनुषः, तत्र—अजगवं नपुंसके, पिनाक पुंसि । (३) शिवानुचराणां द्वे नामनी । (४) ब्रह्म-विष्णु शिवादिशक्ति-भूतानां देवतानामैकैकं नाम, स्त्रियाम् । (५) नामत्रय योगादिशक्तिजप्रभाव विशेषस्य । तत्रैश्वर्यं क्लीवे, भूति-विभूती—स्त्रियाम् ।

[1]उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥
शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।
अपर्णा पार्वती दुर्गा मृडानी चण्डिकाऽम्बिका ॥
[ आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा । ]
[2]विनायको विघ्नराजद्वैमातुरगणाधिपाः ।
अप्येकदन्तहेरम्बलम्बोदरगजाननाः ॥ ३८ ॥
[3]कार्तिकेयो महासेनः शरजन्मा षडाननः ।
पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥३९॥
बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ।
षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥
[ शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः ।
कर्ममोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका ॥ ]

(१) पार्वत्या. सप्तदश-(१७)-नामानि स्त्रियाम् । प्रक्षिप्तैश्चतुर्भिस्तु सहैकविंशति । (२) अष्टौ—गणेशस्य नामानि पुंसि ।

(३) सप्तदश नामानि-(१७)-शिवसूनो. कार्त्तिकेयस्य, तत्र—शरजन्मा नकारान्त, तारकजित्—तकारान्त । सर्वे पुंल्लिङ्गाः ।

इन्द्रो[1] मरुत्वान् मघवा बिडौजाः पाकशासनः ।
वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ॥ ४१ ॥
जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥
वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।
जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः॥४२॥
संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।
आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य[2] तु प्रिया ॥
पुलोमजा शचीन्द्राणी, नगरी[3] त्वमरावती ।

---

(१) इन्द्रस्य पञ्चत्रिंशत्—(३५) नामानि तत्र—मरुत्वान्—तकारान्त , मघवा—नान्तः, वृद्धश्रवोबिडौजसौ—सकारान्तौ । सुत्राम-वृष-वृत्रहणो नकारान्ता । गोत्रभित्—तकारान्त । ऋभुक्षि-वज्रि—जम्भभेदिनो नकारान्ता. । ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्ष , ऋभुक्षा, ऋभुक्षिभ्यामित्यादि रूपाणि । तुराषाट्—हकारान्त । स्वाराट्—जकारान्तः, सर्वे पुंसि बोध्या ।

(२) तस्य = इन्द्रस्य प्रिया—पत्नी—पुलोमजा—शची—इन्द्राणी, इति—त्रीणि पौलोम्या इन्द्रपत्न्या नामानि । (३) तस्य = इन्द्रस्य नगरी तु—अमरावती । एकमिन्द्रनगर्या नामधेयम् ।

ह[1]य उच्चैःश्रवाः, सू[2]तो मातलिर्नन्द[3]नं वनम् ॥
स्यात्प्रासा[4]दो वैजयन्तो, ज[5]यन्तः पाकशासनिः ।
ऐ[6]रावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ४७ ॥
ह्रा[7]दिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ।
शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥
[8]व्योमयानं विमानोऽस्त्री ना[9]रदाद्याः सुरर्षयः ।
[10]स्यात्सुधर्मा देवसभा, पी[11]यूषममृतं सुधा ॥४८॥

---

(१) एकमिन्द्राश्वस्य नाम । उच्चै श्रवा –सकारान्त. । (२) एकमिन्द्र सारथे. । (३) इन्द्रकाननस्य एक नाम, तच्च नपुसकम् । (४) एकमिन्द्रभवनस्य नाम, तच्च पुंसि । (५) द्वे नामनी इन्द्रपुत्रस्य जयन्तस्य ।

(६) चत्वारीन्द्रहस्तिन ऐरावतस्य नामानि । (७) दश वज्रस्य नामानि । तत्र—ह्रादिनी—स्त्रियाम्, वज्रकुलिशौ—द्वावपि पुनपुसकयो, भिदुर क्लीबे, अशनिः–स्त्रीपुसयो, शेषा –पञ्च पुसि ।

(८) द्वे देवादिविमानस्य नामानि । तत्र व्योमयान–क्लीबे, विमानः—पुसि नपुंसके च । (९) नारद भारत-पर्वत तुम्बुरु-देवलादीनामेक नाम पुंसि । (१०) द्वे देवसभाया, तत्र–सुधर्मा, सुधर्मे, सुधर्माः—इत्यादि रूपाणि । स्त्रीलिङ्ग सुधर्माशब्द । (११) त्रीणि–अमृतस्य, तत्र—सुधा स्त्रियां, पीयूषामृते—क्लीबे ।

[1]मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ।
[2]मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥४९॥
[3]पञ्चैते देवतरवो मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥
[4]सनत्कुमारो वैधात्रः, [5]स्वर्वैद्यावश्विनीसुतौ ।
नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ॥
स्त्रियां [6]बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।
[7]हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ।५२।

(१) चत्वारि नामानि स्वर्गगङ्गायाः, तानि च स्त्रियाम् ।

(२) पञ्च सुमेरोर्नामानि । सर्वाणि पुंसि ।

(३) मन्दारादयः पञ्च देवानां तरवः = वृक्षाः, तत्र—हरिचन्दनं—पुंसि क्लीबे च, द्वे स्त्रियाम् । (४) सनत्कुमारस्य ब्रह्मसूनोर्द्वे नामनी ।

(५) अश्विनीकुमारयोः षड् नामानि—प्रायो द्विवचनान्तानि ।

(६) द्वे उर्वश्यादेः, तत्र अप्सरश्शब्दो नित्यं बहुवचनान्तः स्त्रियाम् ।

(७) त्रिदिवौकसां = देवानां, गन्धर्वाः = गायकाः = हाहा-हूहूतुम्बुरु-वृषणश्च—विश्वावसु—चित्ररथादयः,—एकैकं देवगायकानां नाम ।

[1]अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥५३॥
बर्हिःशुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥
रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।
हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ॥५५॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तमौर्वस्तु[2] वाडवो वडवानलः ॥५६॥
[3]वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् ।

(१) अग्नेश्चतुस्त्रिंशत्—( ३४ )—नामानि, तत्र—जातवेदोबर्हि.-हिरण्यरेत.-सप्तार्चिर्दमुनस. सान्ताः। शुष्म-कृष्णवर्त्मानौ नकारान्तौ। तनूनपात्-शिखावच्छब्दौ तकारान्तौ। हुतभुक्-जकारान्त., शुष्मशब्दोऽकारान्तोपि क्वचित्, अपित क्लीवे, शेषा पुंसि। तनूनपात्, तनूनपातौ इत्यादि। शत्रन्तस्य तु तनूनपातौ इत्यादीति-सुधाकृतः। काली कराली मनोजवा सुलोहिता-सुधूम्रवर्णा स्फुलिङ्गिनी-विश्वदासाख्याः सप्तवह्नेर्जिह्वा.। (२) त्रीणि वडवानलस्य।

(३) वह्नेर्ज्वालाया पञ्च, तत्रज्वाल-कीलौ—स्त्रीपुंसयो, अर्चिरादयस्त्रय शब्दा स्त्रियाम्। अर्चि क्लीबेऽपि। अर्चि शब्दः सकारान्तोऽपि, इकारान्तोपि

त्रिषु स्फुलिङ्गोऽग्निकणः [2]सन्तापः संज्वरः समौ ॥

[[3]उल्का स्यान्निर्गतज्वाला [4]भूतिर्भसितभस्मनी ।

क्षारो रक्षा च, [5]दावस्तु दवो वनहुताशनः ॥]

[6]धर्मराजः पितृपतिः समवर्ती परेतराट् ।

कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ॥५८॥

कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।

[7]राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः ॥५९

रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ।

यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥६०॥

---

च । 'अग्नेर्भ्राजन्तेऽर्चयः' इति श्रुते ।

(१) द्वे अग्निस्फुलिङ्गस्य, ['चिनगारी'] तत्र स्फुलिङ्गशब्दस्त्रिष्वपि लिङ्गेषु बोध्यः, स्त्रियां 'स्फुलिङ्गा'टाबन्तः । (२) द्वे सन्तापस्य नामनी । (३) उल्कायाः (४) भस्मनः । (५) वनवह्नेः । (६) चतुर्दश यमराजस्य नामानि । तत्र समवर्ती नकारान्त, प्रेतराट् जकारान्तः, एवं यमराडपि जान्तः, यमुनाभ्राता—ऋकारान्तः । सर्वे पुंसि । (७) पञ्चदश नामानि राक्षसानाम् । तत्र—यातुरक्षसी क्लीबे, शेषाः पुंसि, रक्षश्शब्दः सान्तः, क्रव्यात्-दकारान्तः । यातु,-यातुनी,

¹प्रचेता वरुणः पाशी यादसाम्पतिरप्पतिः ।
²श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥
पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।
समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६२ ॥
नभस्वद्वातपवनपवमानप्रभञ्जनाः ।
[ ³प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः ।]
⁴प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥

यातूनि । रक्ष, रक्षसी, रक्षांसीत्यादि रूपाणि ।

(१) पञ्च वरुणस्य नामानि, प्रचेता प्रचेतसौ, प्रचेतस । पाशी, पाशिनौ पाशिन । (२) विंशतिर्नामानि वायो, सर्वे पुंसि । मातरिश्वा नान्त । मातरिश्वानौ, मातरिश्वान । मरुत्, मरुतौ, मरुत । नभस्वान्, नभस्वन्तौ, नभस्वता । जगत्, जगतौ, जगत । वर्त्तमाने पृषदित्यादिना निपातितस्य तु जगन् जगन्तौ, जगन्त । 'जगत्प्राण' इत्येकमपि नाम । (३) महावातस्य त्रीणि । (४) प्रत्येक देहस्थपञ्चवायूनाम् । प्राणादीना कर्माणि यथा—

"अन्नप्रवेशन मूत्राद्युत्सर्गोऽन्नविपाचनम् ।
भाषणादि निमेषादि तद्व्यापारा क्रमादमी ॥"

[1]शरीरस्था इमे रंहस्तरसी तु रयः स्यदः ।
जवोऽथ [2]शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥६४॥
सत्वरं चपलं तूर्णमविलम्बितमाशु च ।
[3]सततानारताश्रान्तसन्ततविरतानिशम् ॥६५॥
नित्यानवरताजस्रमप्यथा[4]तिशयो भरः ।
अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥६६॥
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ।
क्लीबे [5]शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत्

(१) पञ्चवेगाख्यगुणस्य नामानि । रंहस्तरसी क्लीबे, शेषा. पुंसि । रंहः, रंहसी, रहांसि । तर , तरसी, तरांसि । (२) एकादश नामानि शीघ्रस्य, इमे सर्वे शब्दा क्लीबलिङ्गा असत्त्ववाचिनश्चेत्,सत्त्ववाचिनस्तु त्रिषु लिङ्गेषु ज्ञेयाः । (३) नव निरन्तर कार्यकरणस्य । अत्रापि लिङ्गनिर्णय पूर्ववत् । सततमजस्रं-शब्दावव्ययावपि क्वचिद्दृश्यते । (४) चतुर्दश नामान्यतिशयस्य, अतिशयभर-शब्दौ पुंस्येव । 'अतिशयं पचती'त्यादौ तु क्रियाविशेषणत्वाद्वाचनिकं नपुंसकत्व-मितिकेचित् । अन्येतु-क्रियाविशेषणत्वादत्र द्वितीयैव, न क्लीबता, नियतलिङ्गत्वा-दित्याहु. । ( ५ ) शीघ्रादिदृढपर्यन्तमद्रव्ये वर्तमानं [क्रियाविशेषणत्वात्—] क्लीबे

कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥६८॥
किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ॥ ६९ ॥
अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः ।
कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ७०

---

भवति, यथा–शाक [illegible], [illegible], [illegible] मध्ये [illegible] महान्ति — द्रव्य-वाच [illegible] पिशु = वाच्यलिङ्गं तत्–यथायथं स्त्रीपुंनपुंसकं ज्ञेयम् । यथा–शोभो रथ, शोभा [illegible], शोभं [illegible] –इति । [illegible] तु पुंस्त्वं । 'भेद्याद्यो'ऽपि पाठे–विशेष्यलिङ्गानि पदानि बोध्यः ।

(१) सप्तदश कुबेरस्य नामानि । यक्षराट्–जकारान्तः, मनुष्यधर्मा, मनुष्यधर्माणौ, मनुष्यधर्माणः । ऐलविल, ऐलविलोऽपि, लकारयोरैक्याभावात् । इडविला पुलस्तिभार्या कुबेरजननी, तस्या अपत्यमिति विग्रहः । (२) एकं कुबेरोद्यानस्य, नाम—क्लीबे । (३) एकं कुबेरपुत्रस्य नामधेयम् । (४) अस्य कुबेरस्य स्थानं निवास –कैलास –पुंसि । (५) अस्य कुबेरस्य पूः = नगरी, अलका स्त्रियाम् । (६) अस्य–कुबेरस्य विमान-पुष्पक क्लीबे ।

१स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः ।
निधिर्ना शेवधिर्भेदाः पद्मशंखादयो निधेः॥७१॥

ॐ इति स्वर्गवर्गः ॥१॥ ॐ

ॐ अथ व्योमवर्गः ॐ

४द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।
नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥१॥
वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ॥
[विहायसोऽपि नाकोऽपि द्युरपि स्यात्स्वरव्ययम् ।
तारापथोऽन्तरिक्षञ्च मेघाध्वा च महाविलम् ॥]

ॐ इति व्योमवर्गः ॥२॥ ॐ

(१) चत्वादि किन्नरस्य नामानि, किन्नराश्च देवविशेषाः—अश्वमुखाः पुरुषाकृतयः, नरमुखाः अश्वकायाश्च । (२) द्वे निधेर्नामनी, [ खजाना' इति भाषा' ] । (३) दिव्यनिधिभेदस्य प्रत्येकम् । तत्र पद्मोऽस्त्रियाम् ।

(४) चतुर्विंशतिः–(२४)–नामानि आकाशस्य । तत्र–द्योशब्दः 'दिव्' शब्दश्च स्त्रियाम् आकाशविहायसी–पुंसि क्लीबे च । शेषा नपुंसके । व्योम, व्योमनी, व्योमानि । सुरवर्त्म, सुरवर्त्मनी, सुरवर्त्मानि । नभ , नभसी, नभांसि । वियद्, वियती, वियन्ति । विहायः, विहायसी, विहायांसि । विहाया., विहायसौ, विहायस इति च ।

❀ अथ दिग्वर्गः ❀

दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।
प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥१॥
उत्तरा दिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे ।
[ अवाग्भवमवाचीनमुदीचीनमुदग्भवम् ।
प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु ॥ ]
इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥२॥
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।
[ रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ।
बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः ॥ ]

---

(१) पथ दिशो नामानि । दिक्, दिशौ, दिश । ककुप्, ककुभौ, ककुभ । हरित्, हरितौ, हरित. । स्त्रीलिङ्गा सर्वे शब्दा इमे ।

(२) पूर्वा—प्राची, दक्षिणादिक्—अपाची, पश्चिमा-प्रतीची, उत्तरा दिग्—उदीची स्त्रियाम् । (३) दिग्भववस्तुमात्रे दिश्यं-स्त्रीपुंनपुसक । (४) प्राची-पतिरिन्द्र , पूर्वा दिक् ऐन्द्रीयादिरीत्या सर्वत्र ध्येयम् । पूर्वस्या. इन्द्र., आग्नेय्या अग्नि , दक्षिणस्या यम., नैर्ऋत्या—नैर्ऋत , पश्चिमाया वरुण , वायव्यस्य वायु', उत्तरदिशाया. कुबेर , ईशान्याः शिव —अधिपतिरित्यर्थ । (१-२) पूर्वस्या

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥३॥
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।
करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् ॥
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।
क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्॥
अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम् ।
अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥६॥

दिशो गजः—ऐरावतः, हस्तिनी अभ्रमु स्त्रियाम् । आग्नेय्या गजः—पुण्डरीक, करिणी च कपिला । दक्षिणस्या गज—वामन, करिणी पिङ्गला । नैर्ऋत्या गजः कुमुदः, तत्पत्नी—अनुपमा । पश्चिमाया अञ्जनो गज, ताम्रपर्णी हस्तिनी । वायव्यदिग्गजः—पुष्पदन्त, करिणी शुभ्रदन्ती । उत्तरस्या गजः सार्वभौमः, करिणी-अंगना । ईशान्या गजः—सुप्रतीकः, करिणी—अञ्जनावतीत्यर्थः । (३) द्वे अग्न्यादिकोणस्य नामनी । तत्र—अपदिशं—क्लीबमव्ययम्, विदिक्—चकारान्त. स्त्रियाम् । (४) द्वे मध्यस्य नामनी—क्लीबे । (५) द्वे मण्डलाकारेण परिणतस्य सेनादिसमूहस्य । (६) मेघस्य पञ्चदश नामानि, अभ्र क्लीबे, शेषाः पुंसि । तडित्वान्, तडित्वन्तौ । जलमुक् जलमुचौ । अम्बुभृत् । अम्बुभृतौ ।

धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत् ।
घनजीमूतमुदिरजलमुग्धूमयोनयः ॥ ७ ॥
[1]कादम्बिनी मेघमाला [2]त्रिषु मेघभवेऽभ्रियम् ।
[3]स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ॥८॥
[4]शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ।
तडित्सौदामनी विद्युच्चञ्चला चपला अपि ॥९॥
[5]स्फूर्जथुर्वज्रनिर्घोषे [6]मेघज्योतिरिरम्मदः ।
[7]इन्द्रायुधं शक्रधनुस्तदेव [8]ऋजु रोहितम् ॥ १० ॥

(१) द्वे मेघानां पङ्क्तेर्नामनी,—स्त्रियाम् । (२) मेघभवे वस्तुनि—अभ्रियं—स्त्रीपुनपुंसकं ज्ञेयम् । (३) चत्वारि मेघध्वनेर्नामानि । तत्र—मेघनिर्घोषः पुंसि, शेषाः क्लीबे । आदिना निर्ह्रादध्वनिध्वानादयः । (४) विद्युन्नामानि (बिजलीके नाम) दश । तत्र तडिद्विद्युच्छब्दौ तकारान्तौ, सर्वे स्त्रीलिङ्गाः । (५) वज्रध्वनेः (बिजली की गड़गड़ाहट के) द्वे नामनी । (६) वज्राग्नेर्द्वे नामनी (आकाशसे गिरनेवाली बिजलीका नाम) । मेघज्योतिः, मेघज्योतिषी, मेघज्योतींषि । (७) इन्द्रधनुषो द्वे नामनी । ते च क्लीबे । तत्र शक्रधनुः—सकारान्तः । (८) तत् = इन्द्रधनुः—वक्रत्वादिना यदि ऋजु = अवक्रं स्यात्तदा 'रोहित'मित्युच्यते,—क्लीबे ।

[1]वृष्टिर्[1]वर्षं [2]तद्विघातेऽवग्राहावग्रहौ समौ ।
[3]धारासंपात आसारः [4]शीकरोऽम्बुकणाः स्मृताः ॥

[5]वर्षोपलस्तु करका [6]मेघच्छन्नेऽह्नि दुर्दिनम् ।
[7]अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥१२॥

अपिधानतिरोधानपिधानाच्छादनानि च ।
[8]हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः॥१३॥

---

(१) द्वे वर्षाया नामनी, तत्र—वृष्टिः स्त्री, वर्षं नपुंसकम्। (२) तस्याः वृष्टेः—विघाते = अवरोधे—अवग्राह — अवग्रहश्च—पुंसि। (३) द्वे अतिवृष्टेर्नामनी, पुंसि। (४) जलकणस्यैकं नाम—शीकरः, सीकरोऽपि—पुंसि। (५) वर्षोपलस्य [—'ओला' 'पत्थर'—] नामद्वयम्। करका—स्त्रियां, 'करक'-शब्दोऽप्यस्ति पुंलिङ्गः।

(६) मेघान्धकारितदिनस्यैकं नाम, क्लीवे। (७) अन्तर्धानस्याष्टौ नामानि। अन्तर्धाव्यवधाशब्दौ—स्त्रियाम्, अन्तर्धि—पुंसि शेषाः नपुंसकलिंगाः। (८) चन्द्रमसो विंशतिर्नामानि—पुंसि। चन्द्रमाः चन्द्रमसौ, चन्द्रमसः। ग्लौः, ग्लावौ, ग्लावः।

विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।
कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु ॥
भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके ।
चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ॥
कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ।

---

(१) चन्द्रषोडशांशस्यैकं नाम—स्त्रियाम् । (२) द्वे रविचन्द्रबिम्बस्य, तत्र—बिम्बः—पुनपुंसकयोः, मण्डलं विशेष्यनिघ्नं, त्रिषु लिङ्गेषु । (३) खण्डस्य [टुकडा] चत्वारि नामानि । तत्र—भित्तं नपुंसकं, शकल—खण्डशब्दौ—पुंसनपुंसकयोः, अर्द्धशब्दः त्रिषु लिङ्गेषु—(विशेष्यनिघ्नः)। (४) समानेंऽशेऽर्धशब्दो नित्यं क्लीवलिंगं तुल्यस्य खण्डद्वयस्य मध्ये एकस्य खण्डस्यैकं नाम । (५) त्रीणि ज्योत्स्नायाः ['चादनी'] नामानि । (६) निर्मलतायाः द्वे नामनी । प्रसादः पुंसि, प्रसन्नता स्त्रियाम् ।

(७) षट् चिह्नस्य नामानि । तत्र—कलङ्काङ्कौ—पुंसि, शेषाः क्लीबे । लक्ष्म नान्त—लक्ष्म, लक्ष्मणी, लक्ष्माणि ।

[1]सुषमा परमा शोभा [2]शोभा कान्तिर्द्युतिश्छविः॥
[3]अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्।
प्रालेयं मिहिका चाथ [4]हिमानी हिमसंहतिः॥
[5]शीतं गुणे [6]तद्वदर्थाः सुषीमः शिशिरो जडः।
तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः॥
[7]ध्रुव औत्तानपादिः स्या[8]दगस्त्यः कुम्भसम्भवः।
मैत्रावरुणिरस्यैव [9]लोपामुद्रा सधर्मिणी ॥ २० ॥
[10]नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्।

---

(१) उत्कृष्टशोभाया एकं नाम—स्त्रियाम्। (२) शोभायाश्चत्वारि नामानि—स्त्रियाम्। (३) हिमस्य सप्त नामानि। तत्र अवश्याय तुषार-नीहाराः पुंसि, मिहिका स्त्रियां, शेषा नपुंसके। (४) हिमसमूहस्य [ 'बर्फ के ढोके' ] द्वे नामनी। (५) शैत्यस्य [ 'ठण्ड' जाडा' का ] एक नाम, क्लीबे। (६) शीतलस्य वस्तुनः सप्त नामानि—त्रिषु लिंगेषु, [ विशेष्यलिंगानि ] (७) द्वे ध्रुवस्य नामनी—पुंसि। (८) अगस्त्यस्य ऋषेस्त्रीणि नामानि पुंसि। (९) अस्य=अगस्त्यस्य पत्न्या नामद्वयं—स्त्रियाम्। (१०) नक्षत्राणां [ तारा' ] नामानि षट्, तत्र तारा—स्त्रियां। 'तारका'शब्दः, 'उडु'शब्दश्च-स्त्रियां क्लीबे च, शेषा नपुंसके। तारकं, तारके, तारकानि। तारका, तारके,

दाक्षायण्योऽश्विनीत्यादि तारा अश्वयुगश्विनी ॥
राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया ।
समा धनिष्ठाःस्युः प्रोष्ठपदाः भाद्रपदाः स्त्रियः ॥
मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी ।
इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः २३
बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ।

तारकाः । उडु, उडू, उडव –मतिवत् । उडुं, उडुनो, उडूनि–वारिवत् ।

(१) एकं अश्विन्यादिसप्तविंशतिनक्षत्राणां नाम–स्त्रियाम् ।

(२) द्वे अश्विन्या नामनी–स्त्रियाम् । अश्वयुक्, अश्वयुजौ अश्वयुजः । (३) द्वे विशाखाया नामनी–स्त्रियाम् । (४) पुष्यनक्षत्रस्य त्रीणि–पुंसि । (५) द्वे धनिष्ठानक्षत्रस्य नामनी–स्त्रियाम् ।

(६) द्वे पूर्वभद्रपदोत्तरभद्रपदयोर्नामनी–स्त्रियाम् । (७) मृगशिरोनक्षत्रस्य त्रीणि नामानि । तत्र–आग्रहायणी स्त्रिणा, मृगशिरः, मृगशिरसी, मृगशिरांसि । मृगशीर्षं, मृगशीर्षे, मृगशीर्षाणि । उभौ शब्दौ नपुंसके । 'मृगशिरः'शब्द केचित्स्त्रियामप्याहु । (८) मृगशिरोनक्षत्रशिरोभागस्थितानां पञ्चानां स्वल्प-ताराकाणामेकं नाम—स्त्रियाम् ।

(९) बृहस्पतेर्नव नामानि–पुंसि ।

जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ॥
[1]शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ।
[2]अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ॥
[3]रौहिणेयो बुधः सौम्यः [4]समौ सौरिशनैश्चरौ ।
[5]तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ॥
[6]सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः ।
[ मरीचिराङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥ ]
[7]राशीनामुदयो लग्नं ते तु [8]मेषवृषादयः ॥२७॥
[9]सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ।

---

(१) षट्शुक्राचार्यस्य नामानि—पुंसि। (२) मङ्गलस्य पञ्च नामानि पुंसि। (३) बुधस्य त्रीणि नामानि पुंसि। (४) शनैश्चरस्य द्वे नामनी पुंसि। (५) राहो पञ्च नामानि, तत्र तम· क्लीबे, शेषा. पुंसि। तमः तमसी, तमांसि। (६) सप्तर्षीणां नामद्वयम्।

(७) मेषवृषादिराशीनामुदयस्य ['लग्न'] नामैक पुंसि क्लीबे च।

(८) "मेषो वृषोऽथ मिथुन कर्कट· सिंहकन्यके। तुला च वृश्चिको धन्वी मकरः कुम्भमीनकौ।" इति द्वादश राशय। (९) सूर्यस्य सप्तत्रिंशत्–(३७)–नामानि। प्रक्षिप्तै. सप्तदशभि. सह तु (५४)। अर्यमा अर्यमणौ, अर्यमणः।

भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥२८॥
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ।
विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ २९ ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।
विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।
[ पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा ॥
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥
प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ।
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः ॥]
माठरःपिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः३१

---

द्वादशात्मा, द्वादशात्मानौ । भास्वान्, भास्वन्तौ, भास्वन्त , भास्वता । एवं—विवस्वान् । नकारान्त पूषशब्द—पूषा, पूषणौ । सवितृशब्दस्य—सविता, सवितारौ, सवितार । सर्वे पुंसि ।

(१) सूर्यपार्श्ववर्त्तिना प्रधानानां त्रयाणामेकैकं नाम । तदुक्तं क्षीरस्वामिना—
'तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः ।
वह्निश्च दक्षिणे पार्श्वे पिङ्गलो वामनश्च सः ।
यमोऽपि दक्षिणे भागे भवेन्माठरसञ्ज्ञया ॥ इति ।

मध्यमः[1] स्याद्विहसितं रोमाञ्चो[2] रोमहर्षणम् ।
क्रन्दितं[3] रुदितं क्रुष्टं जृम्भस्तु[4] त्रिषु जृम्भणम् ॥
विप्रलम्भो[5] विसंवादो रिङ्गणं[6] स्खलनं समे ।
स्यान्निद्रा[7] शयनं स्वापः स्वप्नः संवेश इत्यपि ॥३६॥
तन्द्री[8] प्रमीला भ्रुकुटिर्भ्रुकुटिर्भ्रूकुटिः[9] स्त्रियाम् ।
अदृष्टिः[10] स्यादसौम्येऽक्ष्णि संसिद्धिप्रकृती[11] त्विमे ॥
स्वरूपं च स्वभावश्च निसर्गश्चाथ[12] वेपथुः ।
कम्पोऽथ[13] क्षण उद्धर्षो मह उद्धव उत्सवः ॥३८॥

ॐ इति नाट्यवर्गः ॥७॥ ॐ



(१) मध्यमहासस्यैकम् । (२) द्वे रोमाञ्चस्य । (३) त्रीणि रोदनस्य । (४) द्वे जृम्भणस्य, त्रिषु । ['जम्भाई'] । (५) वञ्चनस्य द्वे । (६) पिच्छिलादौ पतनस्य द्वे, क्लीबे । बालाना हस्तपादगमनस्येत्येके । (७) पञ्च निद्रायाः । (८) द्वे तन्द्राया, कायावसादस्य वा ['हरारत' 'थकावट']। (९) क्रोधादिना ललाटसंकोचनस्य त्रीणि । ['भ्रुकुटि चढाना'] ।(१०) एक क्रूरदृष्टे स्त्रियाम्'। (११) पञ्च स्वभावस्य । ससिद्धिप्रकृतो—स्त्रियाम् । (१२) कम्पस्य द्वे [ कँपकँपी ] । (१३) पञ्च उत्सवस्य,—सर्वे पुंसि ।

## ॐ अथ पातालभोगिवर्गः ॐ

[१]अधोभुवनपातालं बलिसद्म रसातलम् ।
नागलोकोऽथ [२]कुहरं शुषिरं विवरं बिलम् ॥१॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः ।
[३]गर्तावटौ भुवि श्वभ्रे [४]सरन्ध्रे शुषिरं त्रिषु ॥२॥
[५]अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।
[६]ध्वान्ते गाढेऽन्धतमसं [७]क्षीणेऽवतमसं तमः ॥३॥
[८]विष्वक् सन्तमसं [९]नागाः काद्रवेयास्[१०]तदीश्वरः ।
शेषोऽनन्तो [११]वासुकिस्तु सर्पराजोऽथ गोनसे ॥४॥

(१) पञ्च पातालस्य । तत्र—बलिसद्म नान्त क्लीबे । नागलोकः पुंसि, शेष—क्लीबे । (२) एकादश बिलस्य नामानि । तत्र वपा स्त्रियां, शुषि— पुंनपुंसकयोरिकारान्त । शेषं क्लीबे । (३) छिद्रमात्रस्य द्वे । भुवि श्वभ्रे— गर्तावटौ—इत्यन्वय । (४) छिद्रान्वितस्यैक—त्रिषु । (५) पञ्चान्धकारस्य, तत्रा-न्धकार —पुनपुंसकयो', शेष क्लीबे, तम शब्दः सान्त क्लीबे । (६) घनान्ध-कारस्यैकं नाम—क्लीबे । (७) क्षीणाऽन्धकारस्यैकं क्लीबे । (८) विष्वक्= सर्वतः व्याप्तस्य तमस एकम् । (९) देवयोनिविशेषाणां नागानां द्वे । (१०) शेषनागस्य द्वे । (११) वासुकिसर्पस्य द्वे ।

[1]तिलित्सः स्यादजगरे[2] शयुर्वाहस इत्युभौ ।
[3]अलगर्दो जलव्यालः [4]समौ राजिलडुण्डुभौ ॥५॥
[5]मालुधानो मातुलाहि[6]र्निर्मुक्तो मुक्तकञ्चुकः ।
[7]सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः ॥६॥
आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।
कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥७॥
दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥८॥
[ लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा ।
कुम्भीनसः फणधरो हरिर्भोगधरस्तथा ॥
[8]अहेः शरीरं भोगः स्या[9]दाशीरप्यहिदंष्ट्रिका । ]

(१) तिलित्साख्यसर्पभेदस्य द्वे ।(२) अजगरस्य—त्रीणि । (३) जलसर्पस्य द्वे । (४) द्विमुखसर्पस्य द्वे [ 'दुमुहाँ साँप' ]। (५) द्वे चित्रवर्णाश्चितसर्पस्य [ 'चितकबरा' ]। (६) त्यक्तकञ्चुकस्य द्वे । [ कञ्चुली छोड़े हुए साँप' ]। (७) प्रक्षिप्तैः सह त्रयस्त्रिंशत्–(३३)–सर्पनामानि । तत्र चक्रि–फणि–भोगि–कञ्चुकि–कुण्डलिनो नान्ता पुंसि । गूढपात्–दकारान्त., चक्षुःश्रवा. सान्त. । (८) एक सर्पशरीरस्य । (९) द्वे विषपूर्णदंष्ट्राया. ।

त्रि[१]ष्वाहेयं विषास्थ्यादि स्फ[२]टायां तु फणा द्वयोः।
स[३]मौ कञ्चुकनिर्मोकौ क्ष्वे[४]डस्तु गरलं विषम् ॥९॥
पुंसि क्लीबे च काकोलकालकूटहलाहलाः।
सौराष्ट्रिकः शौल्किकेयो ब्रह्मपुत्रः प्रदीपनः ॥१०॥
दारदो वत्सनाभश्च विषभेदा अमी नव।
वि[६]षवैद्यो जाङ्गुलिको व्या[७]लग्राह्यहितुण्डिकः ११

❁ इति पातालभोगिवर्गः ॥८॥ ❁

---:०:---

## ❁ अथ नरकवर्गः ❁

स्या[८]न्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्।
त[९]द्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १ ॥

---

(१) सर्पविषादेरेकं नाम,–त्रिषु लिङ्गेषु। (२) द्वे फणाया। (३) द्वे सर्पत्वच. [ 'काचुली' ]। (४) त्रीणि विषस्य। (५) नवानां विषभेदानामेकैकम्। तत्र काकोल–कालकूट–हलाहला पुंसि क्लीबे च। (६) विषवैद्यस्य द्वे [ 'गारुडी' ]। ( ७ ) द्वे सर्पग्राहिणः [ 'संपेरा' 'कालबेलिया' ]। (८) चत्वारि नरकस्य, तत्र–दुर्गति.—स्त्रियाम्। (९) नरकभेदाना प्रत्येकं पृथक् पृथक्। अविचिरिति च्छेदः।

[1]संघातः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः ।
[2]प्रेता वैतरणी सिन्धुः [3]स्यादलक्ष्मीस्तु निर्ऋतिः ॥
[4]विष्टिराजूः कारणा तु [5]यातना तीव्रवेदना ।
[6]पीडा बाधा व्यथा दुःखम[7]मानस्यं प्रसूतिजम् ॥ ३ ॥
[8]स्यात्कष्टं कृच्छ्रमाभीलं [9]त्रिष्वेषां भेद्यगामि यत् ।

ॐ इति नरकवर्गः ॥९॥ ॐ



ॐ अथ वारिवर्गः ॐ

[10]समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।

(१) नरकवासिनां जन्तूनां द्वे । (२) वैतरणीनद्या एकम् । (३) अलक्ष्म्या नामद्वयम् । (४) द्वे–निर्मूल्यकर्मकरणस्य [ 'वेगार' ] । नरके हठात्प्रक्षेपस्येत्येके । भद्राया इत्यन्ये । द्वयमपि स्त्रियाम् । आजूरूकारान्तः । (५) त्रीणि नरकयातनायाः, तीव्रवेदनामात्रस्येत्येके । (६) त्रीणि मनःपीडायाः । (७) प्रसूतिसमयवेदनाया द्वे । (८) त्रीणि शारीरिककष्टस्य–क्लीबे । पीडे-त्यारभ्य नवापि दुःखस्येत्येके । (९) एषां = दुःखादीनां मध्ये यद् भेद्यगामि = उपचारादिना – द्रव्यवाचि, तत्त्रिषु लिङ्गेषु बोध्यम् । यथा—दुःखा सेवा, 'दुःखः पुत्रो मूर्खः' इत्यादि । (१०) पञ्चदश समुद्रस्य नामानि, तत्रोदन्वान्–तकारान्त,

उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः॥१

रत्नाकरो जलनिधिर्यादःपतिरपाम्पतिः ।

तस्य प्रभेदाः [1]क्षीरोदो लवणोदस्तथापरे ॥२॥

[2]आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।

पयः कीलालममृतं जीवनं भुवनं वनम् ॥३॥

कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।

अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ॥४॥

मेघपुष्पं घनरसस्त्रिषु [3]द्वे आप्यमम्मयम् ।

[4]भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥५॥

---

उदन्वान्, उदन्वन्तौ, उदन्वता। एवं सरस्वानपि। सर्वे पुंसि। (१) समुद्रभेदानामेकैकम्—पुंसि। (२) जलस्य सप्तविंशति—(२७)। तत्र आप्शब्दः स्त्रिया बहुवचनान्तः,—आप, अपः अद्भिरित्यादि रूपाणि। वार्शब्दो रान्तो नपुंसके, वा', वारी, वारि। वारि, वारिणी, वारीणि— इति वारिशब्दस्य रूपाणि। पयोऽम्भपाथोऽर्णःशब्दा सान्ता क्लीवे। घनरस पुंसि, शेषा' क्लीवे। (३) जलविकारस्य द्वे,—त्रिषु। (४) तरङ्गस्य चत्वारि, तत्र—भङ्गतरङ्गौ पुंसि, ऊर्मिवीचिशब्दौ स्त्रियां पुंसि च।

¹महत्सूल्लोलकल्लोलौ ²स्यादावर्तोऽम्भसां भ्रमः ।
³पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥
⁴चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ।
⁶कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु ॥७॥
⁷पारावारे परार्वाची तीरे ⁸पात्रं तदन्तरम् ।
⁹द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥८॥

(१) महातरङ्गस्य द्वे-पुंसि। (२) द्वे जलावर्त्तस्य, परावर्त्त्यं जलागमनस्य। [ 'चौढ़ा' ]। (३) चत्वारि जलकणस्य, तत्र—पृषच्छब्दः क्लीबे, विन्दुपृषतौ पुंसि, विप्रुट्—पान्ता स्त्रियाम्। पृषतशब्दोऽप्यस्ति पुंसि। (४) द्वे चक्राकारेण जलभ्रमणस्य [ 'भवर' 'नांद' ]। (५) द्वे जलनिस्सरणजालकस्य ['फुहारा']। केचित्तु—वर्पर्त्तौ नद्यादेरधोदेशस्थजलस्य वेगादुपरि निस्सरणस्येत्याहुः। अन्येतु—चक्राणीत्यारभ्यैतानि चत्वारि समानार्थानीत्याहुः।

(६) पञ्चतीरस्य, तत्र तट—त्रिषु लिङ्गेषु। शेष क्लीबे। रोधः रोधसी, रोधांसि। (७) परतीरावरतीरयोः प्रत्येकमेकैकम्, तत्र परतीरं—पारम्, अर्वाक्तीरम्—अवार—क्लीबे। (८) तटमध्यवर्तिप्रवाहस्यैकम्। [ 'नदी का पाट' ]। (९) द्वे द्वीपस्य, तत्र द्वीपमन्तरीपं च पुनपुंसकम्। 'समुद्र में निकली हुई जमीन' ]।

[1]तोयोत्थितं तत्पुलिनं [2]सैकतं सिकतामयम्।
[3]निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥९॥
[4]जलोच्छ्वासाः परीवाहाः [5]कूपकास्तु विदारकाः।
[6]नाव्यं त्रिलिङ्गं नौतार्ये [7]स्त्रियां नौस्तरणिस्तरिः
[8]उडुपं तु प्लवः कोलः [9]स्रोतोऽम्बुसरणं स्वतः।
[10]आतरस्तरपण्यं स्याद्द्रोणी [11]काष्ठाम्बुवाहिनी ॥
[12]सांयात्रिकः पोतवणिक्[13]कर्णधारस्तु नाविकः।

(१) जलादचिरनिर्गततटस्यैकं क्लीबे। (२) वालुकामयतटस्य क्लीबे, [ 'वालुकामय नदीतीर' ]। ( ३ ) पञ्च कर्दमस्य, तत्र पङ्क-पुंनपुंसकम्। [ कीचड ]। (४) द्वे प्रवृद्धजलस्य निस्सरणमार्गस्य। समधिकजलस्येतस्ततो वहनस्य वा। (५) शुष्कनद्यादौ जलार्थं कृतस्य गर्त्तस्य द्वे। (६) नौतरण-योग्यजलस्य द्वे, नाव्य त्रिषु। ( ७ ) त्रीणि नौकायाः, सर्वे शब्दाः स्त्रियाम्। (८) त्रीणि तृणकाष्ठादिनिर्मिततरणसाधनस्य, नौकाविशेषस्य। (९) अकृत्रिम-जलप्रवाहस्यैकम्, ['झरना' 'सोता'] सान्त. क्लीबे स्रोत शब्द.। (१०) नद्या-दितरणे देयस्य शुल्कस्य द्वे। (११) नौकाविशेषस्य काष्ठपाषाणादिनिर्मितजल-पात्रस्य वा द्वे,—स्त्रियाम्। ['कुण्डी' 'नांद' 'डोंगी']। (१२) द्वे समुद्रयातु-र्वणिजः, [ 'पोतदार' ]। वणिक्—जान्त पुंसि। (१३) द्वे कर्णधारस्य,

**नि[1]र्यामकाः पोतवाहाः [2]कूपको गुणवृक्षकः ॥१२॥**
**नौ[3]कादण्डः क्षेपणी [4]स्यादरित्रं केनिपातकः ।**
**[5]अभ्रिः स्त्री काष्ठकुद्दालः [6]सेकपात्रं तु सेचनम् १३**
**[7]क्लीबेऽर्धनावं नावो[8]ऽर्धेऽतीतनौकेऽतिनु त्रिषु ।**
**त्रिष्वा[9]गाधात् [10]प्रसन्नोऽच्छः [11]कलुषोऽनच्छ आविलः**
**नि[12]म्नं गभीरं गम्भीरम् [13]उत्तानं तद्विपर्यये ।**

[ 'पतवरिया,' 'पतवार पकड़ने वाला' 'मांझी' ] (१) द्वे—पोतवाहानाम्, ['सारंग' 'खेवैया' 'मल्लाह']। (२) द्वे—नौमध्यस्थरज्जुबन्धनदण्डस्य पुंसि। [ 'गुनरखा' इत्याख्यस्य ] । नौबन्धनकीलकस्य—[ 'पाढी' ] इत्याख्यस्येत्यन्ये। (३) नौकाचालनदण्डद्वयस्य, तत्र क्षेपणो 'क्षिपणी' वा स्त्रियाम्। [ 'डाडा' ] । (४) द्वे—नौपृष्ठस्थचालनसाधनस्य। [ 'पतवार' ]

(५) काष्ठनिर्मितकुद्दालस्य द्वे। तत्र—अभ्रि स्त्री। (६) जलप्रक्षेपपात्रस्य द्वे। [ 'पानी फेंकने का तसला' 'डोलची' ]। (७) एक नौकाया अर्धभागस्य, क्लीबे। (८) नौकामतिक्रान्तस्यातिगम्भीरजलादेरेक—त्रिषु। (९) गाधशब्दपर्यन्तं—'त्रिषु' इत्यधिक्रियते। (१०) द्वे स्वच्छस्य—'त्रिषु'। (११) त्रीणि मलिनस्य—त्रिषु। (१२) त्रीणि गम्भीरस्य—'त्रिषु'। (१३) उत्तानस्यैकं—त्रिषु—[ 'छिछला पानी' ]।

[1]अगाधमतलस्पर्शं [2]कैवर्ते दाशधीवरौ ॥१५॥
[3]आनायः पुंसि जालं स्या[4]च्छणसूत्रं पवित्रकम् ।
[5]मत्स्याधानी कुवेणी स्या[6]द्बडिशं मत्स्यवेधनम् १६
[7]पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ।
विसारः शकुली चा[8]थ गडकः शकुलार्भकः ॥१७॥
[9]सहस्रदंष्ट्रः पाठीनः [10]उलूपी शिशुकः समौ ।
[11]नलमीनश्चिलिचिमः [12]प्रोष्ठी तु शफरी द्वयोः॥१८॥

---

(१) अगाधस्य द्वे—त्रिषु। [ 'बहुत गहरा' ]। (२) धीवरस्य त्रीणि। दासो दन्त्यान्तोऽपि। [ 'धीमर' 'केवट' ]। (३) द्वे जालस्य, तत्रानायः पुंसि। जालं—क्लीबे। [ 'जाल' ]। (४) शणसूत्रस्य द्वे। [ 'सूतली' 'डोरी' ]। (५) द्वे मत्स्यस्थापनभाण्डस्य—स्त्रियाम्। (६) मत्स्यवेधनकण्टकस्य द्वे। [ 'कांटा' 'वंशी' 'अकुडा' ]। (७) अष्टौ मत्स्यस्य। तत्र पृथुरोम—शकलिनौ—नान्तौ, सर्वे पुंसि। (८) मत्स्यविशेषस्य द्वे। [ 'मछरी के बच्चे' ]। (९) द्वे पाठीनस्य। (१०) द्वे शिशुकस्य तत्रोलूपी–नान्तः पुंसि। [ 'सूइस' ]। (११) द्वे नलमीनस्य। (१२) द्वे शफर्याः, तत्र प्रोष्ठी—स्त्रियां, शफरः—स्त्रीपुंसयोः। [ 'छोटी मछली' ]।

[1]क्षुद्राण्डमत्स्यसंघातः पोताधान[2]मथो झषाः ।
रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः १९
तिमिङ्गिलादयश्चा[3]थ यादांसि जलजन्तवः ।
[4]तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ॥२०॥
[5]स्यात्कुलीरः कर्कटकः [6]कूर्मे कमठकच्छपौ ।
[7]ग्राहोऽवहारो [8]नक्रस्तु कुम्भीरोऽ[9]थ महीलता २१
गण्डूपदः किञ्चुलको [10]निहाका गोधिका समे ।
[11]रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः २२
[12]मुक्तास्फोटःस्त्रियां शुक्तिः[13]शङ्खःस्यात्कम्बुरस्त्रियाम्

(१) क्षण्डादचिरनिर्गतमत्स्यसमूहस्य द्वे। (२) मत्स्यविशेषाणामेकैकम्। (३) द्वे मकरादिजलजन्तूनां। तत्र—यादः—सान्तं क्लीबे। (४) जलजन्तुभेदानामेकैकम्। (५) द्वे कुलीरस्य [ 'केकड़ा' ] । (६) त्रीणि कच्छपस्य—पुंसि। (७) द्वे ग्राहस्य—[ 'घडियाल' ]। (८) द्वे—नक्रस्य—[ 'नाका' ]। (९) त्रीणि गण्डूपदस्य। [ 'केंचुवा' ] (१०) द्वे गोधाया स्त्रियाम्। [ 'गोह' ]। (११) त्रीणि—'जोंक' इति ख्यातायाः, तत्र—नित्यं बहुवचनान्त. स्त्रीलिङ्गो 'जलौकः'शब्दः सान्त। 'जलौकाशब्दः' टाबन्तोपि। (१२) द्वे शुक्तिकायाः, तत्र शुक्तिः स्त्रियाम्।—[सीपी]। (१३) द्वे शङ्खस्य,—पुंनपुंसकयो।

क्षुद्रशङ्खाः शङ्खनखाः शम्बूका जलशुक्तयः ॥२३॥
भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।
शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः २४
मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका ।
जलाशयो जलाधारस्तत्रागाधजलो ह्रदः ॥२५॥
आहावस्तु निपानं स्यादुपकूपजलाशये ।

---

( १ ) क्षुद्रशङ्खानां द्वे—पुंसि। ( २ ) जलजन्तुक्तिमात्रस्य द्वे, तत्र शम्बूकः स्त्रीपुंसयो, जलशुक्ति स्त्रियाम। [ मोती न उपजानेवाली सीप' ]। (३) षट्—मण्डूकस्य। ( ४ ) द्वे क्षुद्रकिञ्चुलकभेदस्य, [ केंचुवाविशेष ] किञ्चुलकभार्याया इत्यन्ये। (५) भेक्या द्वे स्त्रियाम्। (६) कच्छप्या स्त्रियां द्वे। (७) मद्गुरमत्स्यपत्न्या एकम्। तथा च—भागुरि.—

'भार्या भेकस्य वर्षाभ्वी शृङ्गी स्यान्मद्गुरस्य तु।
शिली गण्डूपदस्यापि कच्छपस्य डुलि स्मृता ॥"

(८) जलौकासदृशजलजन्तुभेदस्य द्वे, तत्र—दुर्नामशब्द नान्तोऽपि, आकारान्तोपि च स्त्रियाम्। (९) द्वे जलाशयानां तडागादिनां पुंसि। (१०) अगाधजलस्य तडागस्य। (११) कूपसमीपरचितजलाशयस्य—द्वे तत्र आहावः पुंसि, निपानं क्लीबे। [ 'खेल, कोठा' ]।

[1]पुंस्येवाऽन्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥२६॥
नेमि[2]स्त्रिकास्य वीना[3]हो मुखबन्धनमस्य यत् ।
[4]पुष्करिण्यां तु खातं[5]स्यादखातं देवखातकम् २७
[6]पद्माकरस्तडागोऽस्त्री [7]कासारः सरसी सरः ।
[8]वेशन्तः पल्वलं चाल्पसरो [9]वापी तु दीर्घिका २८
[10]खेयं तु परिखा [11]धारस्त्वम्भसां यत्र धारणम् ।
[12]स्यादालवालमावालमावापो[13]ऽथ नदी सरित् २९

(१) चत्वारि कूपस्य, तत्रोदपान—पुंसि क्लीबे च, शेषा. पुंस्येव। (२) अस्य = कूपस्य नेमि —रज्जुधारणयन्त्र— त्रिका, उभे स्त्रियाम् [ 'भूण' 'गडारी' ]। (३) कूपमुखे—इष्टकादिबद्धस्य भागस्यैकम्। [ 'कूए की जगत' ]। (४) चतुष्कोणखातस्य द्वे। पुष्करिणी स्त्रियाम्। (५) अकृत्रिम जलाशयस्य द्वे। देवद्वारस्थजलाशयस्य वा। (६) पद्मसहितागाधजलाशयस्य द्वे। तत्र तडागोऽस्त्रियाम्। (७) त्रीणि कृत्रिमपद्माकरस्य। पद्मापि सरोवरस्येत्येके ['झील']। सर सान्तं क्लीबे। सरसी—स्त्रियाम्। (८) स्वल्पम रोवरस्य त्रीणि। पल्वलोऽस्त्री। अल्पसर. सान्त क्लीबे। (९) द्वे वाप्या.। (१०) द्वे—दुर्गादिवेष्टनखातस्य [ 'खाई' ]। (११) जलाधारस्य—[ 'बान्ध' ]। (१२) वृक्षमूलकृतजलाधारस्य त्रीणि। [ 'थाल' 'सिंचाई का पानी ठहरने के लिए पेड़ की जड़ में बनाया गया गढ़ा' ]। (१३) प्रक्षिप्तै. सह षोडश नद्या —

तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।
स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा ॥३०॥
[ कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती । ]
[1]गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥३१॥
[2]कालिन्दी सूर्यतनया यमुना शमनस्वसा ।
[3]रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥३२॥
[4]करतोया सदानीरा [5]बाहुदा सैतवाहिनी ।
[6]शतद्रुस्तु शुतुद्रिः [7]स्याद्विपाशा तु विपाट् स्त्रियाम्
[8]शोणो हिरण्यवाहः[9]स्यात्कुल्याल्पा कृत्रिमा सरित्

---

(१) अष्टौ गङ्गायाः । (२) चत्वारि यमुनायाः । शमनस्वसृशब्द ऋकारान्त । (३) चत्वारि नर्मदानद्याः । (४) करतोयानद्या द्वे । (५) बाहुदानद्या द्वे । (६) 'शतलज' नामकनद्या द्वे—स्त्रियाम् । (७) विपाशानद्या द्वे स्त्रियाम्, तत्र विपाट् शान्ता [ 'व्यास नदी' ] (८) शोणनदस्य द्वे पुंसि । [ 'शोणभद्र' ] । (९) याल्पा कृत्रिमा सरित् सा कुल्या, [ 'नहर' ]

[१]शरावती वेत्रवती चन्द्रभागा सरस्वती ॥३४॥
कावेरी सरितोऽन्याश्च [२]सम्भेदः सिन्धुसङ्गमः ।
[३]द्वयोः प्रणाली पयसः पदव्यां [४]त्रिषु तूत्तरौ ॥३५॥
देविकायां सरय्वां च भवे दाविकसारवौ ।
[५]सौगन्धिकं तु कल्हारं [६]हल्लकं रक्तसन्ध्यकम् ॥३६॥
[७]स्यादुत्पलं कुवलयम[८]थ नीलाम्बुजन्म च ।
इन्दीवरं च नीलेऽस्मिन् [९]सिते कुमुदकैरवे ॥३७॥
[१०]शालूकमेषां कन्दः [११]स्याद्वारिपर्णी तु कुम्भिका ।

(१) पञ्च नदीविशेषाणां नामानि । अन्या अपि चर्मण्वतीगोदावरीप्रभृतयो नद्यः सन्तीत्यर्थः । (२) नदीसङ्गमस्य द्वे । (३) पयोनिर्गमनमार्गस्यैकं, तत्र प्रणालशब्दः स्त्रीपुंसयोः । [ 'पनाला' ] । (४) उत्तरौ—दाविकसारवशब्दौ—त्रिषु इत्यर्थः । देविकानदीभवस्यैकं नाम,—'दाविक' इति । सरयूनदीजातस्य चैकं नाम—'सारव' इति । इमौ शब्दौ त्रिषु ।

(५) सन्ध्याविकाशिनः शुक्लसरोजस्य द्वे—क्लीबे । (६) रक्तसरोजस्य द्वे । (७) द्वे कुमुदस्य—क्लीबे । (८) द्वे नीलोत्पलस्य क्लीबे । (९) श्वेतोत्पलस्य द्वे । (१०) उत्पलकन्दस्यैकं—नपुंसके । (११) जलकुम्भिकाया द्वे स्त्रियाम् ।

[1]जलनीली तु शैवालं शैवलोऽथ[2] कुमुद्वती ॥३८॥
कुमुदिन्यां [3]नलिन्यां तु विसिनीपद्मिनीमुखाः ।
[4]वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥३९॥
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।
पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥४०॥
विसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।
[5]पुण्डरीकं सिताम्भोजमथ[6] रक्तसरोरुहे ॥४१॥
रक्तोत्पलं कोकनदं [7]नालो नालमथास्त्रियाम् ।
मृणालं विसम[9]ब्जादिकदम्बे षण्डमस्त्रियाम् ४२
[10]करहाटः शिफाकन्दः [11]किञ्जल्कः केसरोऽस्त्रियाम् ।

(१) त्रीणि शैवालस्य [ 'सिवाल,' 'काई' ]। (२) द्वे कुमुदिन्याः [ 'कुमुदकी लता' ]। (३) त्रीणि कमललतायाः स्त्रियाम्। सरोजिन्यादयोऽपि-योध्याः। (४) षोडश भूम्युत्पन्नकमलस्य। कमलादय शब्दा पुनपुसकयो'। पर क्लीवे एव प्रयुज्यन्ते, पुसि त्वप्रयुक्ता'। (५) श्वेतकमलस्य द्वे। (६) त्रीणि रक्तकमलस्य। (७) द्वे पद्मादिदण्डस्य। 'नाला'—इति टावन्त शब्दोऽपि क्वचित्। [ 'नाल' ]। (८) मृणालस्य द्वे—पुनपुसकयोः। (९) एक कमलादिसमूहस्य क्लीवे पुसि च। (१०) पद्मादिमूलस्य द्वे। (११) पद्मादिकेसरस्य द्वे। तत्र केसरोऽस्त्रियाम्।

संवर्तिका[1] नवदलं बीजकोशो[2] वराटकः ॥४३॥

इति वारिवर्गः ॥ १० ॥



उक्तं[3] स्वर्व्योमदिक्कालधीशब्दादिसनाट्यकम् ।
पातालभोगि नरकं वारि चैषां च सङ्गतम् ॥१॥
इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः[4] ॥२॥

इत्यमरसिंहकृतौ नामलिङ्गानुशासने प्रथमं काण्डं समाप्तम् ।

---

(१) पद्मादीना नवीनपत्राणां द्वे । तत्र संवर्त्तिका—स्त्रियाम्, केशरोऽपि । (२) द्वे कमलादिबीजकोशस्य । (३) स्वरादयो दश वर्गा उक्ताः । सङ्गतम् = एषां मध्ये प्रसङ्गादन्यदप्युक्तमित्यर्थः । यथा स्वर्गप्रक्रमे—देवासुरादीनामुक्तिः । (४) समर्थितः = सम्यक् कथितः ।

वादिकुम्भीन्द्रपञ्चास्य—स्नेहिरामजिशास्त्रिणाम् ।
पौत्रेणामरकोशस्य टिप्पणीयं समर्थिता ॥१॥

—— :०: ——

* इति श्रीस्नेहिरामशास्त्रिणां पौत्रेण श्रीशिवनारायणशास्त्रिणां पुत्रेण श्रीरघुनन्दनप्रसादशास्त्रिणा कविचक्रवर्तिना विरचितायाम्—अमरकोशटीकायां प्रथमकाण्डम् । *

# द्वितीयं काण्डम्

—⁂—

## ❀ अथ भूमिवर्गः ❀

[1]वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।
नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥१॥
[2]भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः २
सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ३
[ विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ।
भूतधात्री रत्नगर्भा जगती सागराम्बरा ॥ ]
[3]मृन्मृत्तिका प्रशस्ता तु [4]मृत्सा मृत्स्ना च मृत्तिका ।

---

(१) इह द्वितीयकाण्डे पृथिव्यादयो दश वर्गा. उदिता = वक्तुमारब्धा, अङ्गानि—मृदादीनि, उपाङ्गानि—ऊपरादीनि । ( २ ) सप्तविंशतिर्भूमे:, विपुलादिभि —प्रक्षिप्तैरेकादशभिस्तु सहाष्टात्रिंशत्—स्त्रियाम् । (३) द्वे मृद.—स्त्रियाम् । मृद्दान्ता । (४) प्रशस्तमृत्तिकाया द्वे,—स्त्रियाम् ।

उर्वरा[1] सर्वसस्याढ्या स्यादूषः[2] क्षारमृत्तिका ॥४॥
ऊषवानूषरो[3] द्वावप्यन्यलिङ्गौ स्थलं[4] स्थली ।
समानौ[5] मरुधन्वानौ द्वे खिलाप्रहते[6] समे ॥५॥
त्रिष्वथो[7] जगती लोको विष्टपं भुवनं जगत् ।
लोकोऽयं[8] भारतं वर्षं शरावत्यास्तु[9] योऽवधेः ॥६॥
देशः प्राग्दक्षिणः प्राच्यः उदीच्यः[10] पश्चिमोत्तरः ।
प्रत्यन्तो[11] म्लेच्छदेशः स्यान्मध्यदेशस्तु[12] मध्यमः ७

---

(१) सर्वसस्योत्पत्तियोग्यमृद एकम् । (२) द्वे क्षारमृत्तिकाया, ऊष — पुंसि । (३) द्वे क्षारमृद्विशिष्टभूम्यादे त्रिषु लिङ्गेषु । (४) द्वे स्थलस्य अकृत्रिमस्थानस्य । (५) द्वे—मरुदेशस्य—पुंसि, धन्वा नान्त. । (६) अकृष्टस्य क्षेत्रादे· द्वे—त्रिषु [ 'विना जोता खेत' ] । (७) जगतः पञ्च । तत्र जगती स्त्रिया, जगत् क्लीबे । (८) भारतवर्षस्यैक क्लीबे । (९) शरावत्या अवधेर्यो देश —प्राग्दक्षिणः—स प्राच्यः । (१०) शरावत्या अवधेर्यः पश्चिमोत्तरो देश स—उदीच्यः । (११) भारतसीमाप्रदेशस्य द्वयम् । (१२) प्रयागकुरुक्षेत्र-हिमवद्विन्ध्यमध्यदेशस्य द्वे । तदुक्तम्—

"हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेश· प्रकीर्त्तितः ॥"

[1]आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ।
[2]नीवृज्जनपदो [3]देशविषयौ तूपवर्तनम् ॥८॥
त्रिष्वागोष्ठान्नडप्राये [4]नड्वान्नड्वल इत्यपि ।
[5]कुमुद्वान् कुमुदप्राये [6]वेतस्वान् बहुवेतसे ॥९॥
[7]शाद्वलः शादहरिते [8]सजम्बाले तु पङ्किलः ।
[9]जलप्रायमनूपं स्यात्पुंसि [10]कच्छस्तथाविधः ॥१०॥
स्त्री [11]शर्करा शर्करिलः [12]शार्करः शर्करावति ।
[13]देश एवादिमावेवमुन्नेयाः [14]सिकतावति ॥११॥

---

(१) हिमगिरिविन्ध्यमध्यदेशस्य द्वे । हिमस्यागः—पर्वत—हिमाग इति विग्रह । हिमालयोरिति पाठे—हिमेनाल्यत इति हिमाल = हिमालय.—इत्यर्थ· (२) जनपदस्य द्वे, तत्र नीवृत्स्त्रियाम् । [ 'जिला' ] । (३) वङ्गादि-देशस्य त्रीणि । अत ऊर्ध्वं गोष्ठशब्दपर्यन्त शब्दास्त्रिपु ज्ञेया (४) द्वे नडबहुल· प्रदेशस्य—त्रिपु । (५) कुमुदबहुलदेशस्यैक—त्रिपु । (६) वेतसबहुलदेशस्यैक—त्रिपु । ( ७ ) नवतृणप्रचुरदेशस्यैक—त्रिपु । (८) कर्दमयुक्तप्रदेशस्यैक—त्रिपु । ( ९ ) जलबहुलदेशस्य द्वे—त्रिपु । (१०) अनूपसदृशो नद्यादे· समीपस्थ प्रदेश कच्छ—पुंसि । (११) शर्करा—( कङ्करी )—युक्तदेशस्य द्वे, तत्र शर्करा स्त्रियाम् । (१२) शर्करा—( ककडी )—युक्तवस्तुमात्रस्य द्वे । (१३) आदिमौ—शर्कराशर्करिलौ देश एवेत्यर्थ । (१४) एव सिकता·(बालुका)·

देशो[1] नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः ।
स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥१२॥
सुराज्ञि[2] देशे राजन्वान् स्यात्[3]ततोऽन्यत्र राजवान् ।
गोष्ठं[4] गोस्थानकं तत्[5]तु गौष्ठीनं भूतपूर्वकम् ॥१३॥
पर्यन्तभूः[6] परिसरः सेतु[7]रालौ स्त्रियां पुमान् ।
वामलूरश्च[8] नाकुश्च वल्मीकं पुन्नपुंसकम् ॥१४॥
अयनं[9] वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।

---

वति देशे—सिकता—सिकतिलौ द्वौ, तत्र सिकता स्त्रियाम्। सिकता-(वालुका)-वति वस्तुमात्रे—सैकतः सिकतावानिति ।

(१) नदीजलनिष्पन्नव्रीहिपालितो देश.—'नदीमातृकः', वृष्ट्यम्बुनिष्पन्न व्रीहिपालितः—'देवमातृकः'—त्रिपु । (२) श्रेष्ठराजयुक्तदेशादेरेकं—त्रिपु । (३) साधारणदुष्टराजयुक्तदेशादेरेक—त्रिपु । (४) द्वे—गोष्ठस्य ( 'गौ का ठाण' ) (५) भूतपूर्वगोष्ठस्यैकम् । (६) द्वे ग्रामनगरनद्यादि-समीपभूमे. । (७) सेतोर्द्वे, तत्रालि. स्त्रिया, सेतु—पुंसि । [ 'पुल' ] । (८) पिपीलिकादिनिष्काशितमृत्पुञ्जस्य त्रीणि, तत्र वाल्मीक—पुंनपुंसक, शेषौ—पुंसि । (९) द्वादश मार्गस्य, [ 'रास्ता' ] । तत्र वर्त्म नान्तं क्लीबे ।

सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥१५॥
[1]अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ।
[2]व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः॥१६
[3]अपन्थास्त्वपथं तुल्ये [4]शृङ्गाटकचतुष्पथे ।
[5]प्रान्तरं दूरशून्योऽध्वा [6]कान्तारं वर्त्म दुर्गमम्॥१७
[7]गव्यूतिः स्त्री क्रोशयुगं [8]नल्वः किष्कुचतुःशतम् ।
[9]घण्टापथः संसरणं [10]तत्पुरस्योपनिष्करम् ॥१८॥

---

अध्वा—नान्त पुंसि, पथिशब्दोऽपि नान्त पुंसि। पदव्यादयः—स्त्रियाम्।
(१) शोभनमार्गस्य त्रीणि—पुंसि । तत्रातिपथिसुपथिशब्दौ नान्तौ।
(२) दुष्टस्य मार्गस्य पञ्च पुंसि, तत्र कदध्वशब्दो नान्त । (३) मार्गा-भावस्य द्वे । अपथिशब्दो नान्त पुंसि, अपथं—नपुंसकम् । (४) द्वे चतुष्पथस्य क्लीबे,—[ 'चौराहा' ]। (५) एकं छायादिशून्यनिर्जलदूरदेशस्य,—क्लीबे। (६) दुर्गममार्गस्यैक—नपुंसके। (७) क्रोशद्वयस्य द्वे, तत्र गव्यूति—स्त्री । (८) किष्कूणां = हस्तानां चतुश्शतस्यैक पुंसि । [ ४०० हाथ का नाम ]। ( ९ ) द्वे राजमार्गस्य [ 'सड़क' ]।
(१०) नगरराजमार्गस्यैक—नपुंसके।

[ द्यावापृथिव्यौ[1] रोदस्यौ द्यावाभूमी च रोदसी
दिवस्पृथिव्यौ गञ्जा[2] तु रुमा स्याल्लवणाकरः ॥ ]

ॐ इति भूमिवर्गः ॥१॥ ॐ

—:०:—

ॐ अथ पुरवर्गः ॐ

पूः[3] स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमोऽन्यत्तु[4] यन्मूलनगरात्पुरम् ॥१॥
तच्छाखानगरं वेशो[5] वेश्याजनसमाश्रयः ।
आपणस्तु[6] निषद्यायां विपणिः[7] पण्यवीथिका ॥२॥

(१) भूम्याकाशयोश्च पञ्च—नित्य द्विवचनान्ती । (२) द्वे लवणखनेः, [ 'निमक की खान' ] तत्र रुमा स्त्रियाम् । * इति भूमिवर्गः । *

(३) सप्त पुर्या नामानि, पू शब्दोरान्तः स्त्रिया, पुरीनगर्यौ—स्त्रियां, क्लीबे च पक्षे—पत्तनसाहचर्यात् । (४) मूलनगरं—राजधानी, ततोऽन्यत् यन्नगर तस्यैकं नाम । (५) वेश्याजननिवासभूमे । (६) द्वे हट्टस्य, [ 'दुकान–हाट' ] तत्र निपद्या—स्त्रियाम् । (७) द्वे पण्यवीथ्याः—स्त्रियाम् । [ 'बाजार' ] ।

रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम् ।
प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः ॥३॥
भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ।
गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥४॥
निशान्तपस्त्यसदनं भवनाऽऽगारमन्दिरम् ।
गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः॥५॥
वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् ।
चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम्॥६॥

(१) त्रीणि रथ्यायाः [ 'रास्ता-गली' 'चबूतरा' ]। (२) द्वे इष्टिकादिनिर्मितस्य प्राकारमूलाधारस्य,—[ 'पुस्ती' ] तत्र वप्र—पुंसि, नपुंसके च। (३) त्रीणि प्राकारस्य [ 'कोट' 'शहरपनाह' ] (४) एकं कण्टकादिवृतेः [ 'बाड़' ]। (५) द्वे भित्ते, तत्र भित्तिः स्त्री। (६) अन्तर्निहित कीकस = अस्थि यस्मिन् तत् कुड्यम्—'एडूकम्' इति। (७) षोडश गृहस्य, तत्र गृहान्तं—क्लीबे, वेश्मसद्मनी-नान्ते। गृहशब्द पुंसि तु नित्य बहुवचनान्त। निकाय्यादयः पुंसि। (८) चत्वारि सभागृहस्य [ 'हाल'—'कमरा' ] तत्र—कुटी—स्त्रीपुंसयो, शालासभे स्त्रियाम्। (९) द्वे चतुःशालस्य,—परस्पराभिमुखशालाचतुष्टयगृहस्य। [ चौशाल ]। (१०) द्वे मुनिगृहस्य

[1]चैत्यमायतनं तुल्ये [2]वाजिशाला तु मन्दुरा ।
[3]आवेशनं शिल्पिशाला [4]प्रपा पानीयशालिका ॥७॥
[5]मठश्छात्रादिनिलयो [6]गञ्जा तु मदिरागृहम् ।
[7]गर्भागारं वासगृहम्[8]अरिष्टं सूतिकागृहम् ॥८॥
[[9]कुट्टिमोऽस्त्री निबद्धा भूः[10]चन्द्रशाला शिरोगृहम् ।
[11]वातायनं गवाक्षोऽथ [12]मण्डपोऽस्त्री जनाश्रयः ।

---

वन—पर्णशाला—स्त्रियाम्, उटजोऽस्त्रियाम् । (१) द्वे स्तूपस्य ['बौद्ध स्तूप'] वर्तते । (२) द्वे अश्वशालायाः, [ 'घुड़शाल,' 'अस्तबल' ] । (३) द्वे—स्वर्णकारादिशिल्पिशालायाः, [ 'कारखाना' ] । (४) जलशालायाः । [ 'पौसरा'—'प्याऊ' ] । ( ५ ) संन्यासिविद्यार्थिजननिवासगृहस्यैकम् । [ 'छात्रावास' 'मठ' ] । (६) मदिरागृहस्य द्वे । गञ्जा—स्त्रियाम् । [ 'कलवरिया' ] भाण्डागारे तु पुंनपुंसकयोर्गञ्जः । (७) मन्दिरादौ—देवप्रतिमानिवासगृहस्य द्वे । [ 'ज्नानीखाना' सभामण्डप' ] । (८) सूतिकागृहस्य द्वे, [ 'सौरी' ] । सप्तापि पर्याया इत्येके । (९) द्वे कुट्टिमस्य [ –'पक्का आँगन' ] (१०) द्वे चन्द्रशाला, [ 'बंगला'-'चौबारा ] (११) द्वे 'खिड़की' 'झरोखा' 'मोखा' इत्याख्यातस्य । (१२) द्वे मण्डपस्य [ 'मांडा' 'मड़वा' इत्याख्यस्य ] । स्त्रीक्लीबे इत्येके ।

[1]हर्म्यादि धनिनां वासः [2]प्रासादो देवभूभुजाम् ॥९॥
[3]सौधोऽस्त्री राजसदनम् [4]उपकार्योपकारिका ।
[5]स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च ॥१०॥
विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम् ।
[6]स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥११॥
शुद्धान्तश्चावरोधश्च [7]स्यादट्टः क्षौममस्त्रियाम् ।
[8]प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥१२॥
[9]गृहावग्रहणी देहल्य[10]ङ्गणं चत्वराजिरे ।
[11]अधस्ताद्दारुणि शिला [12]नासा दारूपरिस्थितम् १३

(१) एकं धनिगृहस्य [ 'हवेली' ] क्लीबे । आदिना स्वस्तिकादि । (२) राजगृहस्य, मन्दिरस्य चैकम् । [ 'महल' ] । (३) द्वे गृहश्रेष्ठस्य राजगृहस्य च । [ 'कोठी' ] । सौध -पुंनपुंसके । (४) द्वे राजगृहसामान्यस्य । ( ५ ) राजधनिगृहविशेषाणामेकैकम् । ( ६ ) अन्तःपुरस्य चत्वारि (७) द्वे [ 'अटारी' इति ख्यातस्य ] गृहस्योपरिगृहस्य । क्षौममस्त्रियाम् । (८) त्रीणि द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्त्तिचतुष्कस्य ['दर्वाजे के आगे का चौक'] । (९) द्वे देहल्या स्त्रियाम् ( देहली ) । (१०) त्रीणि चत्वरस्य नपुंसके । ['आंगण'] । (११) एकं द्वारस्तम्भाधःस्थितकाष्ठस्य स्त्रियाम् । (१२) द्वारस्तम्भो

[1]प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तु पक्षकम् ।
[3]वलीकनीध्रे पटलप्रान्तेऽ[4]थ पटलं छदिः ॥१४॥
[5]गोपानसी तु वलभीछादने वक्रदारुणि ।
[6]कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम् ॥१५॥
स्त्री द्वाद्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ।
तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ॥१६॥
[11]कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु ।

---

ध्वंकाष्ठस्यैकम् । [ 'पटिया' इत्याख्यातस्य भित्तिधारककाष्ठशिलादेर्वा । ]
(१) 'खिड़की'त्याख्यातस्य गुप्तद्वारस्य वा द्वे । (२) द्वे पार्श्वद्वारस्य । (३) गृहाच्छादनपटलप्रान्तभागस्य त्रीणि क्लीबे । [ 'छान का अन्त भाग ]। (४) द्वे छदिष क्लीबे, छदि सान्त । [ छान' ]। केचिच्छदिष. स्त्रीत्वमाहु । (५) वलभ्या. = चन्द्रशालायाश्छादने–'गोपानसी'—[छज्जा] । (६) त्रीणि द्वारस्य, तत्र द्वा शब्दो रान्त स्त्रियाम् । (७) वेदिकाया द्वे । [ 'चबूतरा' 'वेदी' ]। (८) द्वारबहिर्भागस्य द्वे । तोरणोऽस्त्री । [ 'दर्वाजे के बाहर का छाया हुआ भाग' ] । (९) नगरद्वारस्य द्वे । (१०) नगरद्वारेऽवतरणाय रचितस्य क्रमनिम्नमृदादिकूटस्यैकम् । ['खुर्रा']।

[1]कपाटमररं तुल्ये तद्विष्कम्भोऽ[2]र्गलं न ना ॥१८॥
[3]आरोहणं स्यात्सोपानं [4]निश्रेणिस्त्वधिरोहणी ।
[5]संमार्जनी शोधनी स्या[6]त्संकरोऽवकरस्तथा ॥१८॥
क्षिप्ते [7]मुखं निःसरणं [8]सन्निवेशो निकर्षणम् ।
समौ [9]संवसथग्रामौ [10]वेश्मभूर्वास्तुरस्त्रियाम् ॥१९
[11]ग्रामान्त उपशल्यं स्या[12]त्सीमसीमे स्त्रियामुभे ।
[13]घोष आभीरपल्ली [14]स्यात्पक्कणः शबरालयः ॥२०॥

ॐ इति पुरवर्गः ॥२॥ ॐ

---

(१) 'केंवाडा'—इत्याख्यास्य द्वे । कपाट—त्रिषु, अररं न पुंसि। (२) कपाटरोधनदण्डस्य—अर्गलस्यैक, तत्रार्गलं न पुंसि । [ 'आगल' ] । (३) द्वे पाषाणादिकृतारोहणमार्गस्य—सोपानस्य [सीढी] । (४) काष्ठादिकृतारोहणस्य द्वे स्त्रियाम्। [काठ का सीढी]। (५) द्वे समार्जन्याः—['झाड़ू' 'बुहारी']। (६) समार्जनीक्षिप्तधूल्यादेः । [ 'कूड़ा' 'कनवार' ] । (७) निस्सरणप्रवेशमार्गस्य द्वे । (८) पुरसम्बन्धिगृहादिपरिच्छिन्नदेशस्य। [ 'वस्ती' ]। ( ९ ) द्वे ग्रामस्य ( १० ) गृहावच्छिन्नभूमेर्द्वे । वास्तुरस्त्रिया, वेश्मभूः स्त्रियाम्। (११) ग्रामसमीपदेशस्य चत्वारि । सीमशब्दो नान्तः,—सीमाशब्दश्चाकारान्तः स्त्रियां, केचित्तु द्वे सीमाया इत्याहु । (१२) द्वे गोपग्रामस्य, [ 'अहीरों की वस्ती' ] (१३) द्वे भिल्लग्रामस्य ।

❀ अथ शैलवर्गः ❀

[1] महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ।
अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥१॥
[2] लोकालोकश्चक्रवालस्[3] त्रिकूटस्त्रिककुत्समौ ।
[4] अस्तस्तु चरमः क्ष्माभृदु[5] दयः पूर्वपर्वतः ॥२॥
[6] हिमवान्निषधो विन्ध्यो माल्यवान् पारियात्रकः ।
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥३॥
[7] पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।
[8] कूटोऽस्त्री शिखरं शृङ्गं [9] प्रपातस्त्वतटो भृगुः ॥४॥

---

(१) त्रयोदश पर्वताना नामानि—पुंसि। शिखरी नान्तः, क्ष्माभृत्तान्तः। (२) सप्तद्वीपवत्या भूमेर्द्वे। (३) लङ्कापर्वतस्य—त्रिकूटस्य द्वे। त्रिककुद् दान्तः। (४) अस्ताचलस्य द्वे। (५) द्वे उदयाचलस्य। (६) पर्वतविशेषाणामेकैकम्। (७) पाषाणस्य सप्त। तत्र—ग्रावाश्मानौ नान्तौ पुंसि। शिलादृषदौ स्त्रियाम्। पाषाणादयः—पुंसि। (८) त्रीणि शिखरस्य, तत्र—कूटशब्दो पुंनपुंसकयोः। (९) त्रीणि प्रपातस्य। [ 'करारा' ]।

[१]कटकोऽस्त्री नितम्बोऽद्रेः [२]स्नुःप्रस्थः सानुरस्त्रियाम्
[३]उत्सः प्रस्रवणं [४]वारिप्रवाहो निर्झरो झरः ॥५॥
[५]दरी तु कन्दरो वा स्त्री [६]देवखातबिले गुहा ।
गह्वरं [७]गण्डशैलास्तु च्युताः स्थूलोपला गिरेः॥६॥
[ [८]दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः । ]
[९]खनिः स्त्रियामाकरः [१०]स्यात्पादाः प्रत्यन्तपर्वताः ।
[११]उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥७॥

---

(१) पर्वतमध्यभागस्य द्वे । कटकोऽस्त्री । (२) पर्वतसमभूभागस्य त्रीणि । स्नु: पुंसि, सानुप्रस्थावस्त्रियाम् । (३) यतो जलस्य निर्गमस्तस्य स्थानस्य द्वे । (४) निर्झरस्य [ 'झरना' ] । उत्सादयः पञ्च पर्याया इत्यन्ये । (५) द्वे कृत्रिमस्य गृहाकारस्य पर्वतविवरस्य । तत्र—कन्दरः—स्त्रीपुंसयोः । (६) चत्वारि अकृत्रिमगुहायाः [ 'प्राकृतिक गुफा' ] । (७) गिरेः पतितानां स्थूलपाषाणानामेकम् । [ 'पहाड से गिरी हुई चट्टान' ] । (८) पर्वतनिर्गतशिलाखण्डस्यैकम् । ( ९ ) खनेर्द्वे, तत्र खनि.—स्त्रियाम् । [ 'खान' ] । (१०) पर्वतनिकटस्थाल्पपर्वतानां द्वे । ( ११ ) अथ—पर्वतसमीपभूमिः— उपत्यका । पर्वतोपरिस्थभूमिः—अधित्यका ।

धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ।
[सुवर्णरौप्यताम्राणि हरितालं मनःशिला ।
गैरिकाञ्जनकासीससीसलोहाःसहिङ्गुलाः ॥
गन्धकोभ्रक इत्याद्या धातवो गिरिसम्भवाः ।]
निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥८॥

ॐ इति शैलवर्गः ॥३॥ ॐ

---

## ॐ अथ वनौषधिवर्गः ॐ

अटव्यरण्यं विपिनं गहनं काननं वनम् ।
महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥१॥

---

(१) पर्वतधातूना मन.शिलादीनामेकम् पुसि ।

"सुवर्णरूप्यताम्राणि हरितालं मन.शिला । गैरिकाञ्जनकासीससीसलोहा सहिङ्गुला ।गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भव. ॥ इति।"—प्रक्षिप्त श्लोक ।

(२) गैरिकस्यैकं, [ 'गेरू' ] । (३) द्वे लतादिच्छन्नस्थानस्य 'कुञ्ज' इत्याख्यातस्य । निकुञ्जकुञ्जौ पुंनपुसकयो । (४) षट् काननस्य [ 'जगल' ]। (५) महतो वनस्य द्वे [ 'वणी' ] । (६) गृहसमीपोपवनस्य,—[ 'गृहोद्यान' घरका वगीचा' ]।

[1]आरामः स्यादुपवनं कृत्रिमं गृहमेव यत् ।
[2]अमात्यगणिकागेहोपवने वृक्षवाटिका ॥२॥
[3]पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ।
[4]स्यादेतदेव [5]प्रमदवनमन्तःपुरोचितम् ॥३॥
वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ।
[6]वन्या वनसमूहे [8]स्यादङ्कुरोऽभिनवोद्भिदि ॥४॥
[9]वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ।
अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः ॥५॥
[10]वानस्पत्यः फलैः पुष्पात्तैर[11]पुष्पाद्वनस्पतिः ।

(१) द्वे उपवनस्य-[ 'बगीचा' ]। (२) एकं मन्त्रि—गणिकादि-गेहोपवनस्य। (३) सर्वसाधारणरूपनगरोद्यानस्य द्वे। तत्राक्रीडः पुमान्। (४) अन्तःपुरोद्यानस्यैकम् [ 'जनाना बाग' ]। (५) पञ्च सान्तरपङ्क्तेः स्त्रियाम्। [ 'कतार' 'पांति' ]। ( ६ ) वृक्षादीनां समूहस्य—सघनतया स्थितस्य स्त्रियाम्। [ 'झुण्ड' ]। ( ७ ) एकं वनसमूहस्य स्त्रियाम्। (८) अङ्कुरस्य द्वे। (९) वृक्षस्य त्रयोदश, तत्र—शाखिविटपिपलाशिनो नान्ता पुंसि। (१०) एकं पुष्पानन्तरोत्पन्नफलशालिवृक्षस्य। (११) एकं पुष्पं विना फलवत आम्रादेः—पुंसि।

[1]ओषध्यः फलपाकान्ताः [2]स्यादवन्ध्यः फलेग्रहिः ६
[3]वन्ध्योऽफलोवकेशी च [4]फलवान् फलिनः फली ।
[5]प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥७॥
फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ।
[6]स्थाणुर्वा ना ध्रुवः शङ्कु[7]र्ह्रस्वशाखाशिफः क्षुपः ॥८॥
[8]अप्रकाण्डे स्तम्बगुल्मौ [9]वल्ली तु व्रततिर्लता ।
[10]लताप्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥९॥
[11]नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।

---

(१) फलपाकानन्तर शुष्काणा व्रीहियवादीनामेकं—स्त्रियाम् । (२) ऋतौ फलप्रदस्य द्वे, त्रिपु । (३) ऋतावपि फलरहितस्य त्रीणि—त्रिपु । (४) फलसहितस्य वृक्षादेस्त्रीणि—त्रिपु । (५) अष्टौ विकसितवृक्षादे.—त्रिपु । (६) शाखापत्रादिरहितस्य वृक्षस्य त्रीणि—[ 'ठूंठ' ] स्थाणुरस्त्री । शङ्कुध्रुवौ पुंसि । (७) एकं ह्रस्वशाखायुतस्य–पादपस्य—[ 'पौधा' ] । (८) स्कन्धरहितद्रुमादेस्त्रीणि । ( ९ ) त्रीणि लतायाः स्त्रियाम् । ( १० ) शाखादिसहिताया विस्तृतलतायास्त्रीणि, उलपः पुंसि, शेषं स्त्रियाम् । [ चमेली आदिकी 'बड़ी वेल' ] । (११) वृक्षादिदैर्घ्यस्य [ 'वृक्ष आदि की ऊँचाई' ] ।

अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः
समे शाखालते स्कन्धशाखा शाले शिफाजटे ।
शाखाशिफावरोहः स्यान्मूलाच्चाग्रं गता लता ११
शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः ।
सारो मज्जा नरि त्वक्स्त्री वल्कं वल्कलमस्त्रियाम् १२

(१) मूलमारभ्य शाखापर्यन्तस्य वृक्षभागस्य द्वे । प्रकाण्डोऽस्त्रियाम् । [ 'पेड़' 'तना' ] । (२) द्वे शाखाया स्त्रिया, [ 'डाली' ] । ( ३ ) स्कन्धप्रदेशोत्पन्नप्रधानस्थूलशाखाया द्वे । [ 'मोटी शाखा' ] । (४) द्वे वृक्षादिमूलस्य [ 'पेड की जड़' ] । (५) शाखाऽवलम्बिनी शिफा–शाखाशिफा, तस्या 'अवरोह' इति नाम । द्वे शाखाशिफाया । [ 'बड़ आदि की जटा' ] । (६) 'वृक्षमूलात्प्रभृति वृक्षाग्रपर्यन्तं गता लताऽप्यवरोह'–इति प्रसङ्गादवरोहपदस्यार्थान्तरमाह । केचित्तु—मूलादूर्ध्वंगता शिफा–लतेत्युच्यत इत्यर्थ इत्याहु ।

(७) वृक्षाग्रदेशस्य त्रीणि । तत्र–शिर. सान्तं क्लीबे । शिखरोऽस्त्रियाम् । [ 'पेड़ की चोटी' ] । (८) वृक्षादिमूलस्य त्रीणि । (९) वृक्षकोमलत्वच, सारभागस्य । [ 'पेड की पतली छाल' 'हीर' ] । मज्जशब्दो नान्तः पुंसि । आकारान्तोपि मज्जाशब्द स्त्रियाम् । (१०) त्रीणि त्वच, त्वक चान्ता स्त्रियाम्, वल्कवल्कले—अस्त्रियाम् ।

[1]काष्ठं दार्वि[2]न्धनं त्वेध इध्ममे[3]धः समित्स्त्रियाम् ।
[4]निष्कुहः कोटरं वा ना [5]वल्लरिर्मञ्जरिः स्त्रियौ ॥१३॥
[6]पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।
[7]पल्लवोऽस्त्री किसलयं [8]विस्तारो विटपोऽस्त्रियाम् १४
[9]वृक्षादीनां फलं सस्यं [10]वृन्तं प्रसवबन्धनम् ।
[11]आमे फले शलाटुः स्याच्छु[12]ष्के वानमुभे त्रिषु १५
[13]क्षारको जालकं क्लीवे [14]कलिका कोरकः पुमान् ।

(१) काष्ठमात्रस्य द्वे, दारुकाष्ठे—क्लीवे। (२) त्रीणि वह्नि सधुक्षणतृणकाष्ठादे. [ 'वलिंडा' 'फूस' ]। तत्र—एधः सान्त नपुसके। (३) द्वे यज्ञकाष्ठस्य, एधशब्द पुसि। समित् स्त्रियाम्। ['समिधा'] पञ्चापि पर्याया इत्येके। (४) वृक्षकोटरस्य द्वे, तत्र कोटरः पुनपुसके ['खोडर']। (५) द्वे मञ्जर्याः स्त्रियाम्। (६) षट् पत्राणाम्, तत्र—छदशब्दः पुसि, शेष नपुसके। (७) द्वे पल्लवस्य,—पल्लवोऽस्त्री, किसलयं क्लीवे। [ 'कोंपल' 'नयेपत्ते' ]। (८) वृक्षविस्तारस्यैकम् ['वृक्ष की शाखा आदि का फैलाव' 'घेरा']। (९) वृक्षादिफलस्यैकम्। (१०) पुष्पादिवन्धनस्यैकम्। (११) एकमपक्वफलस्य—त्रिषु। ['कच्चा फल']। (१२) एक शुष्कफलस्य—त्रिषु। (१३) द्वे नूतनकलिकाया., तत्र जालक—क्लीवे। (१४) द्वे अविकसितस्य पुष्पस्य, तत्र कोरकः पुमान्।

[1]स्याद्गुच्छकस्तु [2]स्तवकः कुड्मलो मुकुलोऽस्त्रियाम्
[3]स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ।
[4]मकरन्दः पुष्परसः [5]परागः सुमनोरजः ॥१७॥
[6]द्विहीनं प्रसवे सर्वं [7]हरीतक्यादयःस्त्रियाम् ।
[8]आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥१८॥
बार्हतं च फले [9]जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्

---

(१) द्वे गुच्छकस्य [ 'गुच्छा' ]। (२) द्वे ईषद्विकसितकलिकायाः, [ 'अधखिली कलि' ]। (३) पञ्च पुष्पस्य, तत्र सुमनश्शब्दः स्त्रियां बहुवचनान्तः, एकवचनान्तोऽपि—कोशान्तरप्रामाण्यात्। (४) पुष्परसस्य द्वे। (५) पुष्परेणोर्द्वे, तत्र—रजस्सान्त क्लीबे। (६) वक्ष्यमाणम् = अश्वत्थादि—फलपुष्पादिषु वर्त्तमान द्वाभ्यां = स्त्रीपुंसाभ्यां हीन—नपुंसकलिङ्ग ज्ञेयमित्यर्थः। विकारावयवयोरुत्पन्नस्याणादिप्रत्ययस्य 'फले लुक्–' 'पुष्पमूलेषु बहुल'मिति लुका लुप्तत्वात्।

(७) परन्तु हरीतक्यादीनां फल स्त्रियामेव, न क्लीबे। पूर्वनियमापवादोऽयम्। आदिना—कोशातकी-बदरी-कण्टकारिकादयः। (८) अश्वत्थस्य फलम्—आश्वत्थम्, एव-वेणु-प्लक्ष-न्यग्रोध-इङ्गुदी-बृहतीनां फलानां नामैकैकम्। (९) त्रीणि-जम्बूफलस्य, तत्र-जम्बूः स्त्रियां, शेष क्लीबे। [ 'जामुन' ]।

[1]पुष्पे जातिप्रभृतयः स्वलिङ्गा [2]व्रीहयः फले ॥१९॥
[3]विदार्याद्यास्तु मूलेऽपि [4]पुष्पे क्लीबेऽपि पाटला।
[5]बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥२०॥
अश्वत्थेऽथ [6]कपित्थे स्युर्दधित्थग्राहिमन्मथाः।
तस्मिन् दधिफलः पुष्पफलदन्तशठावपि ॥२१॥
[7]उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः।
[8]कोविदारे चमरिकःकुद्दालो युगपत्रकः ॥२२॥
[9]सप्तपर्णो विशालत्वक् शारदो विषमच्छदः।

---

(१) जाति-मल्लिका यूथिकाद्याः पुष्पे वाच्ये स्वलिङ्गा' यथा—जात्या. पुष्प—जाति'—स्त्रियाम्। (२) एवं व्रीहयो—यवाद्या फले स्वलिङ्गा। यथा—यवानां फलानि—यवा पुंसि। एवं मापा., मुद्गा., गोधूमा'। (३) विदारी-शब्द. मूले पुष्पे फलेऽपि च-स्वलिङ्ग.। यथा—विदार्याः पुष्पादि—विदारी। एवं—गम्भारी, शालपर्णी। (४) पाटलाशब्द पुष्पे क्लीबे, स्त्रीलिङ्गेऽपि च। पुंस्यपि च शाश्वतकोशप्रामाण्यात्। (५) पञ्च पिप्पलस्य [ 'पीपल' ] (६) सप्त 'कैथ' इत्याख्यातस्य। (७) चत्वारि उदुम्बरस्य, [ 'गूगल' ]। (८) चत्वारि कोविदारस्य, ['कचनार']। ( ९ ) चत्वारि सप्तपर्णस्य, ['सनौना छतिवन']।

[1]आरग्वधे राजवृक्षशम्याकचतुरङ्गुलाः ॥२३॥
आरेवतव्याधिघातकृतमालसुवर्णकाः ।
[2]स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥२४॥
[3]वरुणे वरणः सेतुस्तिक्तशाकः कुमारकः ।
[4]पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥२५॥
[5]पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।
तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥२६॥
वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ।
आम्रातके [8]मधूके तु गुडपुष्पमधुद्रुमौ ॥२७॥
वानप्रस्थमधुष्ठीलौ [9]जलजेऽत्र मधूलकः ।

---

(१) अष्टौ 'धनबहेडा' 'सोनालु' इत्याख्यातस्य। (२) पञ्च—'जम्बीरी नीबू'—इति ख्यातस्य। (३) पञ्च वरणवृक्षस्य। (४) पञ्च 'नागकेसरे'ति ख्यातस्य। (५) चत्वारि निम्बतरुभेदस्य [ 'बकाइन नीम' ]। (६) सप्त तिनिशस्य। (७) त्रीणि 'अम्बडा' इत्याख्यातस्य। (८) पञ्च मधूकस्य [ 'महुआ' ]। (९) एक जलजमधूकस्य। 'गिरिजे' इति युक्तः पाठ इति केचित्।

पीलौ[1] गुडफलः स्रंसी तस्मिंस्तु[2] गिरिसंभवे ॥२८॥
अक्षोटकन्दरालौ द्वा[3]वङ्कोटे तु निकोचकः ।
[4]पलाशे किंशुकः पर्णो वातपोतोऽथ वेतसे[5] ॥२९॥
रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ।
द्वौ परि[6]व्याधविदुलौ नादेयी चाम्बुवेतसे ॥३०॥
शो[7]भाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ।
[8]रक्तोऽसौ मधुशिग्रुः [9]स्यादरिष्टः फेनिलःसमौ ३१
बिल्वे [10]शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ।
[11]प्लक्षो जटी पर्कटी स्यान्[12]न्यग्रोधो बहुपाद्वटः॥३२॥

---

(१) त्रीणि पीलुवृक्षस्य । मरुदेशे—[ 'पील' ] इति प्रसिद्धस्य । (२) द्वे —'अखरोट' इति प्रसिद्धस्य । (३) त्रीणि अङ्कोलस्य [ 'ढेरा' ] । (४) चत्वारि पलाशस्य । (५) सप्त वेतसस्य । [ बेंत' ] । (६) चत्वारि जलवेतसस्य । (७) पञ्च शिग्रुवृक्षस्य । [ 'सहेंजन' ] । (८) रक्तशोभाञ्जनस्यैकम् । (९) द्वे अरिष्टस्य,—[ 'रीठा' ] । (१०) पञ्च बिल्ववृक्षस्य । (११) त्रीणि प्लक्षस्य—[ 'पाकर' ] । (१२) त्रीणि वटस्य । [ 'बड' ] । बहुपाद्—दकारान्तः ।

[1]गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।
[2]आम्रश्चूतो रसालोऽसौ [3]सहकारोऽतिसौरभः ॥२३॥
[4]कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ।
[5]शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥२४॥
[6]राजादनं प्रियालः स्यात्सन्नकद्रुर्धनुष्पटः ।
[7]गम्भारी सर्वतोभद्रा काश्मरीमधुपर्णिका ॥२५॥
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ।
[8]कर्कन्धूर्बदरी कोली [9]कोलं कुवलफेनिले ॥२६॥
सौवीरं बदरं घोण्टाऽप्य[10]थ स्यात्स्वादुकण्टकः ।

(१) षट् श्वेतलोध्रस्य । आद्यौ श्वेते, शेषा रक्तलोध्रे इति परे । [ 'लोध' ]। (२) त्रीणि आम्रस्य [ 'आम' ]। (३) एकमतिसुरभिनःस्याम्रस्य । [ 'लगडा आम' ]। (४) पञ्च गुग्गुलुवृक्षस्य । [ 'गूगल' ]। (५) पञ्चोद्दालकस्य [ 'लहेसुवा'–'लिसोड़ा' ]। ( ६ ) चत्वारि प्रियालस्य। [ 'चिरौंजी' ]। (७) सप्त 'खम्भारी ति ख्यातस्य। (८) त्रीणि बदर्याः, कर्कन्धूः स्त्रीपुंसयोः। [ 'झाडी'–'बेरी' ]। घोण्टा = 'छोटा लाल बेर'। ( ९ ) षट् बदरीफलस्य। तत्र घोण्टा–लघुबदर्या नाम। [ 'बेर'–'पिटाल' ]। (१०) पञ्च विकङ्कतस्य। [ 'टांट'—'कैर' ]।

विकंकतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ॥३७॥
[1]ऐरावतो [2]नागरङ्गो नादेयी भूमिजम्बुका ।
[3]तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ३८
[4]काकेन्दुः कुलकः काकपीलुकः काकतिन्दुके ।
[5]गोलीढो झाटलो घण्टा पाटलिर्मोक्षमुष्कको ३९
[6]तिलकः क्षुरकः श्रीमान् [7]समौ पिचुलझावुकौ ।
[8]श्रीपर्णिका कुमुदिका कुम्भी कैडर्यकट्फलौ॥४०॥
[9]क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः ।
[10]तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥४१॥

(१) द्वे 'छोटी नारङ्गी' इत्याख्यस्य । (२) नागरङ्गस्य द्वे । ['बडी नरङ्गी'] । चत्वारि समानार्थानीत्येके । (३) चत्वारि तेन्दुकस्य—['तेंदुआ'] । (४) चत्वारि 'कुचला' इत्याख्यातस्य । 'कटुतिन्दुकस्ये'त्यन्ये । (५) पञ्च लोध्रभेदस्य । [ 'मोखा' ] । (६) त्रीणि तिलकवृक्षस्य । श्रीमच्छब्दस्तान्तः । (७) 'झावु' इत्याख्यस्य द्वे । (८) पञ्च 'कायफल' इत्याख्यस्य । (९) चत्वारि रक्तलोध्रस्य । [ 'पठानी लोध' ] । पट्टी स्त्री । नान्तो वा पट्टिशब्दः । ( १० ) षट् तूदस्य पिप्पलाकारवृक्षस्य, नूदः, तूदोऽपि । [ 'सहतूत' ] ।

तूलं च [1]नीपप्रियककदम्बास्तु हरिप्रिये ।
[2]वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥४२॥
[3]गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ।
प्लक्षश्च [4]तिन्तिडी चिञ्चाम्लिकाथो [5]पीतसारके
सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ।
[6]साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्बरः ॥४४॥
[7]नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ।
[8]राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ॥४५॥
[9]इङ्गुदी तापसतरुर्भूर्जे [10]चर्मिमृदुत्वचौ ।
[11]पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः

(१) चत्वारि कदम्बस्य । (२) चत्वारि भल्लातकस्य । [ 'भिलावा' ]। अग्निमुखी—स्त्री । (३) पञ्च 'पिलखन' इत्याख्यस्य ।

(४) त्रीणि—'इमली' त्याख्यस्य । (५) षट्—'विजयसार' इत्याख्यस्य । (६) पञ्च सालस्य नामानि । (७) पञ्चार्जुनवृक्षस्य [ 'काहू' ] । (८) त्रीणि 'खिरणी' ति ख्यातस्य ।

(९) द्वे इङ्गुद्या, इङ्गुदी स्त्रियां, पुंसि च इङ्गुदः । [ 'हिंगोट' या—'जियापोता' ]। (१०) त्रीणि—'भूर्जपत्रस्य । (११) पञ्च 'सेमर' इत्याख्यस्य ।

[1]पिच्छा तु शाल्मलीवेष्टे [2]रोचनः कूटशाल्मलिः ।
[3]चिरिबिल्वो नक्तमालः करजश्च करञ्जके ॥४७॥
[4]प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ।
[5]करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ॥४८॥
[6]रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ।
[7]गायत्री बालतनयः खदिरो दन्तधावनः ॥४९॥
[8]अरिमेदो विट्खदिरे [9]कदरः खदिरे सिते ।
सोमवल्कोऽप्य[10]थ व्याघ्रपुच्छगन्धर्वहस्तकौ ॥५०॥
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ।
चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥५१॥

---

(१) द्वे 'सेमर का गोंद' इत्याख्यस्य । (२) द्वे कूटशाल्मलेः । (३) 'करञ्जुवा' इत्याख्यस्य चत्वारि । (४) कण्टकिकरञ्जस्य चत्वारि । (५) करञ्जभेदानामेकैकम् । (६) चत्वारि 'रोहिडा' इत्याख्यस्य । (७) चत्वारि खदिरस्य । [ 'खैर' ] । (८) द्वे विट्खदिरस्य । (९) द्वे श्वेतखदिरस्य । (१०) एकादश—एरण्डस्य ।

अल्पा शमी शमीरः[1] स्याच्छमी सक्तुफला शिवा।
पिण्डीतको[2] मरुवकः श्वसनः करहाटकः ॥५२॥
शल्यश्च मदने[3] शक्रपादपः पारिभद्रकः।
भद्रदारु द्रु किलिमं पीतदारु च दारु च ॥५३॥
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः।
पाटलिः[4] पाटलाऽमोघा काचस्थाली फलेरुहा ॥५४॥
कृष्णवृन्ता कुबेराक्षी श्यामा[5] तु महिलाह्वया।
लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ५५
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा।
मण्डूकपर्ण[6]पत्त्रोर्णनटकट्वङ्गटुण्टुकाः ॥५६॥
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः।

---

(१) 'जाँटी' इत्याख्यस्यैकम्। (२) त्रीणि—'जाँट' इत्याख्यस्य। (३) मदनवृक्षस्य षट्—[ मैनफलाख्यवृक्षस्य ]। (४) अष्टौ देवदारुवृक्षस्य। (५) सप्त 'पाडलि' इत्याख्यस्य। तत्र पाटलि स्त्रीपुंसयोः। [ 'कुबेराक्षी' ]। (६) द्वादश प्रियङ्गुवृक्षस्य—[ 'मालकाँगुनी' ]। (७) द्वादश स्योनाकस्य [ 'सोनापाठा' ]।

शोणकश्चारलौ ति[1]ष्यफला त्वामलकी त्रिषु॥५७॥
अमृता च वयस्था च त्रि[2]लिङ्गस्तु बिभीतकः।
नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः॥५८॥
[3]अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता।
हरीतकी हैमवती चेतकी श्रेयसी शिवा॥५९॥
पीत[4]द्रुः सरलः पूतिकाष्ठं चाथ द्रु[5]मोत्पलः।
कर्णिकारः परिव्याधो ल[6]कुचो लिकुचो डहुः॥६०
प[7]नसः कण्टकिफलो नि[8]चुलो हिज्जलोऽम्बुजः।
[9]काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला॥६१॥

---

(१) चत्वारि 'आंवला' इत्याख्यस्य वृक्षस्य। आमलकी–त्रिषु। (२) 'बहेडा' इत्याख्यस्य वृक्षस्य। बिभीतकः—त्रिलिङ्गः। (३) एकादश हरीतक्याः। (४) त्रीणि—सरलस्य ['चीड']। (५) कर्णिकारस्य त्रीणि। ['कठचम्पा']। (६) त्रीणि 'बडहर' इत्याख्यस्य। (७) द्वे 'कटहर' इत्याख्यस्य। (८) त्रीणि स्थलवेतसस्य। समुद्रफलस्येत्यन्ये। (९) चत्वारि—'कठूमर' इत्याख्यस्य। मलयूः—स्त्रियाम्। मल्यूरपि।

अ[1]रिष्टः सर्वतोभद्राहिङ्गुनिर्यासमालकाः ।
पिचुमन्दश्च निम्बेऽथ पि[2]च्छिलाऽगुरुशिंशपा ६२
[3]कपिला भस्मगर्भा सा शिरी[4]षस्तु कपीतनः ।
भण्डिलोऽप्यथ चा[5]म्पेयश्चम्पको हेमपुष्पकः ६३
एतस्य का[6]लिका गन्धफली स्यादथ के[7]सरे ।
बकुलो व[8]ञ्जुलोऽशोके समौ क[9]रकदाडिमौ ॥६४॥
[10]चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।
ज[11]या जयन्ती तर्कारी नादेयी वैजयन्तिका ६५
श्री[12]पर्णमग्निमन्थः स्यात्कणिका गणिकारिका ।
जयोऽथ कु[13]टजः शक्रो वत्सको गिरिमल्लिका ६६

(१) निम्बस्य पट्—['नीम'] । (२) 'सीसम' इत्याख्यवृक्षस्य त्रीणि । (३) एकं कपिलवर्णायाः । (४) 'सिरस'—इत्याख्यस्य त्रीणि । (५) त्रीणि—'चम्पा' इत्याख्यस्य । (६) एक चम्पककलिकाया. । ['चम्पाकली'] । (७) 'मौलसिरी' इत्याख्यस्य द्वे । (८) द्वे अशोकस्य । (९) द्वे दाडिमस्य । (१०) चाम्पेयस्य ['नागचम्पा'] चत्वारि । (११) पञ्च—'अरणी' इत्याख्यस्य । (१२) पञ्च—'अगेथू' इत्याख्यस्य । दशापि अग्निमन्थपर्याया इत्येके । (१३) कुटजस्य चत्वारि ['कुरैया'] ।

एतस्यैव [1]कलिङ्गेन्द्रयवभद्रयवं फले ।
[2]कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥६७॥
[3]कालस्कन्धस्तमालःस्यात्तापिच्छोऽप्यथ [4]सिन्दुके
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ॥६८॥
[5]वेणी खरा गरी देवताडो जीमूत इत्यपि ।
[6]श्रीहस्तिनी तु भूरुण्डी [7]तृणशून्यं तु मल्लिका ६९
भूपदी शीतभीरुश्च सैवास्फोता वनोद्भवा ।
[9]शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ७०
[10]सिताऽसौ श्वेतसुरसा भूतवेश्यथ [11]मागधी ।
गणिकायूथिकाऽम्बष्ठा [12]सा पीताहेमपुष्पिका ७१

(१) त्रीणि कुटजबीजस्य । ['इन्द्रजौ']। (२) चत्वारि करमर्दस्य। ['करौंदा']
(३) त्रीणि तमालवृक्षस्य। (४) पञ्च—'निर्गुण्डी'त्याख्यस्य। (५) पञ्च देवतालस्य।
(६) द्वे भूरुण्ड्याः। (७) द्वे मल्लिकायाः। (८) एकं वनमल्लिकायाः।
(९) चत्वारि शेफालिकायाः। ['नेवारी'] (१०) द्वे श्वेतनिर्गुण्ड्याः।
(११) चत्वारि यूथिकायाः। ['जूही']। (१२) पीतयूथिकायाश्चत्वारि।
['पीली जूही']।

[1]अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ।
[2]सुमना मालती जातिः [3]सप्तला नवमालिका ७२
[4]माध्यं कुन्दं [5]रक्तकस्तु बन्धूको बन्धुजीवकः ।
[6]सहा कुमारी [7]तरणिरम्लानस्तु महासहा ॥७३॥
तत्र[8] शोणे कुरबकस्तत्र[9] पीते कुरण्टकः ।
नीली[10]झिण्टी द्वयोर्बाणादासीचार्तगलश्च सा ७४
सैरेयकस्तु[11] झिण्टी [12]स्यात्तस्मिन् कुरबकोऽरुणे ।
पीता [13]कुरण्टको झिण्टी तस्मिन् सहचरीद्वयोः ७५

---

(१) अतिमुक्तकाख्यस्य पञ्च । (२) पञ्च जाते । तत्र सुमनःशब्द सान्तः स्त्रियाम् । [ 'चमेली' ] । ( ३ ) नवमालिकाया द्वे । (४) कुन्दस्य द्वे । (५) बन्धुजीवकस्य त्रीणि । [ 'दुपहरिया' ] । ( ६ ) त्रीणि कुमार्या । [ 'घीकुआर'—'ग्वारपाठा' ] । (७) द्वे 'कटसरैया' इत्याख्यस्य ।

(८) एकं 'लाल कटसरैया' इत्याख्यस्य । (९) एकं—पीतपुष्पाया महासहाया [ 'पीली कटसरैया' ]। (१०) त्रीणि नीलझिण्टिकाया । (११) झिण्टीसामान्यस्य द्वे । (१२) एकं रक्तकुरण्टकस्य । (१३) द्वे पीतकुरण्टकस्य । तत्र सहचरी—स्त्रीपुंसयोः ।

[1]ओण्ड्रपुष्पं जपा पुष्पं [2]वज्रपुष्पं तिलस्य यत् ।
[3]प्रतिहासशतप्रासचण्डातहयमारकाः ॥ ७६ ॥
करवीरे [4]करीरे तु क्रकरग्रन्थिलावुभौ ।
[5]उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ॥७७॥
मातुलो मदनश्चास्य [6]फले मातुलपुत्रकः ।
[7]फलपूरो बीजपूरो रुचको मातुलुङ्गके ॥७८॥
[8]समीरणो मरुवकः प्रस्थपुष्पः फणिज्जकः ।
जम्बीरोऽप्यथ [9]पर्णासे कठिञ्जरकुठेरकौ ॥७९॥
सितेऽर्जको[10]ऽत्र [11]पाठी तु चित्रको वह्निसंज्ञकः ।
[12]अर्काह्ववसुकास्फोतगणरूपविकीरणाः ॥८०॥

---

(१) द्वे जपापुष्पस्य [ 'ओड्हुल' ]। (२) एक तिलपुष्पस्य । (३) पञ्च-करवीरस्य [ 'कनेर' ]। ( ४ ) करीरस्य त्रीणि-[ 'करील'-'कैर' ] । (५) धतूरस्य सप्त । ( ६ ) धतूरफलस्यैकम् । ( ७ ) चत्वारि मातुलुङ्गस्य । ['बिजौरा'] केचित्त्वाधद्वय बीजपूरस्य, अन्त्यद्वय मातुलुङ्गस्येत्याहु.। (८) पञ्च-मरुवकस्य । [ 'मरुवा' ]। (९) त्रीणि-पर्णासस्य । (१०) एकं श्वेतपर्णासस्य । (११) चित्रकस्य त्रीणि । ['चीता वृच']। (१२) सप्त-अर्कस्य । ['आक'-'मदार']।

मन्दारश्चार्कपर्णोऽत्र [1]शुक्लेऽलर्कप्रतापसौ ।
[2]शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ॥८१॥
[3]वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ।
[4]वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ॥८२॥
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ।
[5]मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥८३॥
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।
[6]पाठाऽम्बष्ठा विद्धकर्णी स्थापना श्रेयसी रसा ॥
एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ।
[7]कटुः कटम्बराऽशोकरोहिणी कटुरोहिणी ॥८५॥
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ।

---

(१) द्वे श्वेतार्कस्य । (२) पञ्च-'गुल्मा' इत्याख्यस्य । (३) चत्वारि वृक्षोपरिजातस्य वृक्षान्तरस्य-'वन्दा' इत्याख्यातस्य (४) नव गुडूच्या । [ 'गुडच' ] । (५) दश मूर्वाया । स्रुवेत्यपि (६) दश-पाठाया । (७) अष्ट कटुरोहिण्याः । [ 'कुटकी' ] । 'कण्डूरा'पि ।

[1]आत्मगुप्ताऽजडाऽव्यण्डा कण्डुरा प्रावृषायणी ॥
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ।
[2]चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।
[3]अपामार्गः शैखरिको धामार्गवमयूरकौ ॥८८॥
प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरी ।
[4]हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ८९
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ।
[5]मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ९०
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ।
[6]यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ९१
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ।
[7]पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका ९२

---

(१) नव मर्कट्याः । [ 'केवाँच' ] । (२) दश मूषिकपर्ण्याः । (३) अष्टावपामार्गस्य । (४) नव भार्ग्याः । ['फञी'] । (५) नव मञ्जिष्ठायाः । ['मजीठ'] । (६) दश यासस्य । ['जवासा'] । (७) नव पृश्निपर्ण्याः । ['पिठवन'] ।

क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा।
[1]निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका॥
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि।
[2]नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका१४
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी।
[3]अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका १५
कालमेषी कृष्णफला वाकुची पूतिफल्यपि।
[4]कृष्णोपकुल्या वैदेही मागधी चपला कणा॥१६॥
उषणा पिप्पली शौण्डी कोलाऽथ [5]करिपिप्पली।
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् १७
[6]चव्यं तु चविकं [7]काकचिञ्चागुञ्जे तु कृष्णला।
[8]पलङ्कषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः॥१८॥

---

(१) दश कण्टकारिकाया। [ 'भटकटैया' 'सत्यानाशी' ]। (२) एकादश नील्याः। [ 'नील' ]। (३) अष्टौ वाकुच्याः, बागची (४) दश पिप्पल्याः। [ 'पीपल' ]। (५) पञ्च-गजपिप्पल्याः। (६) द्वे चव्यस्य। (७) त्रीणि गुञ्जायाः। [ 'चिर्मी'-'घोंघची' ]। (८) सप्त गोक्षुरकस्य [ 'गोखरू' ]

गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ।
[1]विश्वा विषा प्रतिविषाऽतिविषोपविषारुणा ९९
शृङ्गी महौषधं चाथ[2] क्षीरावी दुग्धिका समे ।
[3]शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ॥१००॥
ऋष्यप्रोक्ताऽभीरुपत्रीनारायण्यः शतावरी ।
अहेरुरथ [4]पीतद्रुकालेयकहरिद्रवः ॥१०१॥
दार्वी पचम्पचा दारुहरिद्रा पर्जनीत्यपि ।
[5]वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका १०२
[6]शुक्ला हैमवती [7]वैद्यमातृसिंह्यौ तु वाशिका ।
वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः १०३
[8]आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता

---

(१) अष्टावतिविषायाः । ['अतीस']। (२) द्वे दुग्धिकायाः । ['दुद्धी' इत्याख्यस्य] । (३) दश शतमूल्याः । ['शतावरी'] । (४) सप्त दारुहरिद्रायाः । ['दारुहल्दी'] (५) पञ्च वचायाः । ['वच'] । (६) एकं श्वेतवचायाः । (७) अष्टौ वासकस्य ['अरडूसा']। (८) विष्णुक्रान्तायाश्चत्वारि, स्वामी तु वासकस्येमे पर्याया इति मन्यते ।

[1]इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः १०४
[2]शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ।
मिश्रेयोऽप्यथ [3]सीहुण्डो वज्रद्रुः स्नुक्स्नुही गुडा
समन्तदुग्धाऽथो [4]वेल्लममोघा चित्रतण्डुला ।
तण्डुलश्च कृमिघ्नश्च विडङ्गं पुन्नपुंसकम् ॥१०६॥
[5]बला वाट्यालको [6]घण्टारवा तु शणपुष्पिका ।
[7]मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च १०७
[8]सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ।
त्रिभण्डी रोचनी [9]श्यामापालिन्यौ तु सुषेणिका
काला मसूरविदलार्धचन्द्रा कालमेषिका ।
[10]मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ॥१०९॥

(१) कोकिलाक्षस्य पञ्च । ['तालमखाना']। (२) षट् मधुरिकायाः । (३) षट्—सेहुण्डस्य ['थूहर']। (४) षट्—विडङ्गस्य । (५) द्वे बलायाः ['खिरेंटी'—'बरिआरा']। (६) द्वे शणपुष्प्याः । [ 'सनई, शण' ]। (७) पञ्च-द्राक्षायाः [ 'दाख' ]। (८) सप्त—'सफेद निसोथ' इति ख्यातायाः । (९) सप्त—'काली निसोत' इति प्रसिद्धस्य । (१०) चत्वारि मधुकस्य ['मुलेठी']।

[1]विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्टी च या सिता ।
[2]अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ११०
[3]लाङ्गली शारदी तोयपिप्पली शकुलादनी ।
[4]खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः १११
[5]गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ।
[6]योग्यमृद्धिः सिद्धिलक्ष्म्यौ [7]वृद्धेरप्याह्वया इमे ११२
[8]कदली वारणबुसा रम्भा मोचांशुमत्फला ।
काष्ठीला [9]मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥११३॥
[10]वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ।

---

(१) चत्वारि विदार्या शुक्लाया, कृष्णाया इत्येके । ['विदारीकन्द' 'बिलैया कन्द']। (२) त्रीणि कृष्णविदार्या, शुक्लाया इति—तु दीक्षिता । (३) चत्वारि जलपीप्पल्या । ['जलपीपर']। शाकभेद इत्येके । (४) पञ्च मयूरशिखाया । ['मोरशिखा']। (५) पञ्च शारिवाया. । ['गौरी-सर'–'काली-सर'–'साड'] (६) चत्वारि ऋद्धेः । योग्यं–क्लीबे । (७) पञ्च वृद्ध्याख्यौषधे । (८) पञ्च–कदल्या. ['केला']। (९) त्रीणि मुद्गपर्ण्या. ['मुगौनी']।

(१२) पञ्च–भण्टाक्याः । ['बैंगन–'भटा']।

[1]नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ११४
नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा च सा।
[2]विदारिगन्धांऽशुमती सालपर्णी स्थिरा ध्रुवा ११५
[3]तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च।
[4]भारद्वाजी तु सा वन्या [5]शृङ्गी तु ऋषभो वृषः
[6]गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका।
[7]धामार्गवो घोषकः स्यान्महाजाली स पीतकः ११७
[9]ज्योत्स्नी पटोलिका जाली [10]नादेयी भूमिजम्बुका।
[11]स्याल्लांगलिक्यग्निशिखा [12]काकाङ्गीकाकनासिका।

(१) नव रास्नाया [ 'रासना' ]। (२) पञ्च शालपर्ण्याः। [ 'शालपर्णी' ]। (३) चत्वारि कार्पास्या [ कपास'—'रुई' ]। (४) वनकार्पास्या एकम् [ 'नर्मा बाडी' ]। (५) त्रीणि शृङ्ग्या ['काकडासिंगी']। (६) चत्वारि नागबलाया। [ 'गगेरण'—'ककही' ]। (७) द्वे घोषकस्य [ नेनुआ शाक की बेल' ]। (८) पीतघोषवल्ल्या एकम्। [ 'घीया' ] (९) 'कडुवी तोरई, वनतोरई'—इति प्रसिद्धाया त्रीणि। (१०) द्वे भूमिजम्बुकाया। (११) द्वे लाङ्गल्या [ 'कलियारी' ]। (१२) द्वे काकनघाया। [ 'कौवाठोंठी'—'कागा रोटी' ]।

गोधापदी[1] तु सुवहा मुसली[2] तालमूलिका ।
अजशृङ्गी[3] विषाणी स्याद् गोजिह्वा[4]दार्विके समे ११९
ताम्बूलवल्ली[5] ताम्बूली नागवल्ल्यप्यथ द्विजा ।
हरेणू[6] रेणुका कौन्ती कपिला भस्मगन्धिनी १२०
एलावालुक[7]मैलेयं सुगन्धि हरिवालुकम् ।
वालुकं चाथ पालङ्क्यां[8] मुकुन्दः कुन्दकुन्दुरू १२१
वालं[9] ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ।
कालानुसार्य[10]वृद्धाश्मपुष्पशीतशिवानि तु ।।११२।।
शैलेयं तालपर्णी[11] तु दैत्या गन्धकुटी मुरा ।

(१) द्वे हंसपद्या । (२) द्वे 'मुसली'ति ख्यातायाः । (३) द्वे अजशृङ्ग्याः ['मेढासिंगी'] । (४) द्वे गोजिह्वायाः [ 'गोभी' ] । 'दार्विके'त्यपि । (५) त्रीणि 'नागरवेल' इत्याख्यातस्य [ पान ] । (६) षट् हरेणुकायाः । [ 'संभालू के बीज' ] । (७) पञ्च वालुकस्य [ 'एलवा' ] । ( ८ ) चत्वारि 'कुन्दरू' 'रूमीमस्तंगी' । सल्लकीनिर्यासस्य इति परे । (९) पञ्च ह्रीवेरस्य । [ 'नेत्रबाला' ] । (१०) पञ्च शैलेयस्य, नतु शिलाजतुनः । [छरीला' पत्थर फूल] (११) पञ्च मुरायाः । [ सुगन्धी-मुरा ]

गन्धिनी [1]गजभक्ष्या तु सुवहा सुरभी रसा ।१२३
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।
[2]अग्निज्वालासुभिक्षे तु धातकी धातृपुष्पिका १२४
[3]पृथ्वीका चन्द्रबालैला निष्कुटिर्बहुलाऽथ सा ।
[4]सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः १२५
[5]व्याधिः कुष्ठं पारिभाव्यं व्याप्यं पाकलमुत्पलम् ।
[6]शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः ।१२६
झटाऽमलाऽज्झटा ताली शिवा तामलकीति च ।
[8]प्रपौण्डरीकं पुण्डर्यमथ तुन्नः कुबेरकः ॥१२७॥
कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी ।

( १ ) अष्टौ सल्लक्या. । [ 'सलई' ] । (२) चत्वारि धातक्याः [ 'धाय' ] (३) पञ्चैलाया [ 'एलायची' ] । (४) षध—सूक्ष्मैलाया । [ 'छोटी इलायची' ] । ( ५ ) षट्—कुष्ठस्य । [ 'कूठ' ] 'वाप्य'मित्यपि पठन्ति । ( ६ ) शङ्खिन्यास्त्रीणि [ 'शखाहुली' ] । (७) सप्त भूम्यामलक्या. । [ 'भुंई आंवला' ] । (८) द्वे पौण्डर्यस्य सुगन्धिद्रव्यस्य । [ 'पुण्डरिया' ] । (९) षट्—नन्दीवृक्षस्य [ 'तुणी' ] । (१०) षट् चण्डायाः । [ 'चोरक' ] ।

चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः ॥१२८॥
[1]व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ।
[2]शुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली १२९
[3]धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ।
[4]शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी॥१३०॥
[5]काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे ।
[6]कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥१३१॥
प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ।
[7]ग्रन्थिपर्णं शुकं बर्हपुष्पं स्थौणेयकुक्कुरे ॥१३२॥
[8]मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ।

(१) चत्वारि व्याघ्रनखस्य ['बघनखा'] (२) पञ्च शुषिरायाः ['नलिका'] (३) चत्वारि अञ्जनकेश्या । [अञ्जनकेशी] । (४) पञ्च नखद्रव्यस्य । ['नखला'] । (५) षट् तुवर्यां. ['अरहर'] । (६) अष्टो मुस्तकस्य। ['मोथा'] । (७) ग्रन्थिपर्णस्य पञ्च [ 'धुनेर'—'कुकरौंधा' 'गठिवन'] । (८) दश स्पृक्काया । ['असवरग' 'कपूरी साग'] ।

समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि १३३

[1]तपस्विनी जटामांसी जटिला लोमशा मिसी।

[2]त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् १३४

[3]कर्चूरको द्राविडकः काल्पको वेधमुख्यकः।

[4]औषध्यो जातिमात्रे स्युरजातौ [5]सर्वमौषधम् १३५

[6]शाकाख्यं पत्रपुष्पादि [7]तण्डुलीयोऽल्पमारिषः।

[8]विशल्याग्निशिखानन्ताफलिनी शक्रपुष्पिका १३६

[9]स्यादृक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः।

---

(१) पञ्च जटामांस्या। (२) त्वक्पत्रस्य षट् [ 'तज'–'दालचीनी' ]। (३) चत्वारि कर्चूरस्य ['कचूर']। (४) जातिमात्रविवक्षायामोषधीशब्दस्य प्रयोगः। (५) द्रव्यमात्रविवक्षायान्तु—औषधशब्दप्रयोगः। (६) पत्रपुष्पादि—शाकाख्यं, तदुक्तं—

"मूलपत्रकरीराग्रफलकाण्डाधिरूढकम्।

त्वक्पुष्पं कवकञ्चैव शाकं दशविधं स्मृतम् ॥"

(७) द्वे तण्डुलीयस्य [ चौलाई शाक ]। (८) पञ्च विशल्यायाः [ इन्द्रपुष्पी ]
(९) पञ्च 'विधारा' इत्याख्यस्य।

जुङ्गो [1]ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी १३७
[2]पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ।
[3]हयपुच्छी तु काम्बोजी माषपर्णी महासहा ।१३८
[4]तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ।
[5]बर्बरा कबरी तुङ्गी खरपुष्पाऽजगन्धिका ॥१३९॥
[6]एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ।
[7]चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाऽम्ललोणिका ।१४०
[8]सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ।
[9]नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि १४१
[10]जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ।

---

(१) ब्राह्मयाश्चत्वारि। (२) स्वर्णक्षीर्याः चत्वारि। [ 'सत्यानाशी' ]। (३) चत्वारि माषपर्ण्याः । (४) चत्वारि तुण्डिकेर्याः—[तुण्डिकेरी ]। (५) पञ्च खरपुष्पायाः । (६) चत्वारि एलापर्ण्याः । (७) पञ्च अम्ललोण्याः । (८) पञ्च चुक्रस्य । [ 'चूक'—'अमलवेत' ]। (९) चत्वारि खदिरायाः [ 'हाथा-जोड़ी' ]। (१०) जीवन्तिकायाः षट्—[ 'जीवन्ती' ]।

[1]कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥१४२॥
[2]किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ [3]सप्तला ।
विमला सातला भूरिफेना चर्मकषेत्यपि ॥१४३॥
[4]वायसोली स्वादुरसा वयस्थाऽथ [5]मकूलकः ।
निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ॥
[6]अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ।
मूले [7]पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥१४५॥
[8]अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ।
[9]काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ॥
[10]पुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ।

---

(१) जीवकौषधस्य पञ्च । (२) भूनिम्बस्य त्रीणि—[ चिरायता ]। (३) पञ्च सप्तलाया [सेहुण्ड भेद]। (४) त्रीणि वयस्थाया, [ ककोडी ]। (५) पञ्च वज्रदन्त्या. [दन्तिका]। (६) यवानीद्वयस्य द्वे द्वे नामनी। चत्वारः शब्दा पर्याया इत्येके। [ अजवाइन ]। (७) त्रीणि पुष्करमूलस्य। (८) पञ्च पद्माया। (९) पञ्च रोचन्या, [ कबीला ] (१०) षट् चक्रमर्दस्य ['पुवांड' 'चकवड़' ]।

पद्माट उरणाख्यश्च [1]पलाण्डुस्तु सुकन्दकः ॥१४७॥
[2]लतार्कदुद्रुमौ तत्र हरितेऽथ [3]महौषधम् ।
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥१४८॥
[4]पुनर्नवा तु शोथघ्नी [5]वितुन्नं सुनिषण्णकम् ।
[6]स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि १४९
[7]पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ।
[8]वार्षिकं त्रायमाणा स्यात् त्रायन्ती बलभद्रिका ॥
[9]विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि ।
[10]मार्कवो भृङ्गराजः स्यात्[11]काकमाची तु वायसी ॥
[12]शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः ।

---

(१) द्वे पलाण्डो. [ 'प्याज' ]। (२) पलाण्डुभेदस्य द्वे । (३) पट् लशुनस्य [ 'लहसुन' ]। (४) पुनर्नवाया द्वे [ 'साटी'–'गदहपुन्ना' ] (५) वितुन्नस्य द्वे । [ 'विसखपरा' ]। (६) शतपर्ण्याश्चत्वारि [ 'पटशण' ]। (७) पञ्च ज्योतिष्मत्या. । [ मालकागनी ]। ( ८ ) चत्वारि त्रायमाणायाः । (९) चत्वारि वाराहीकन्दस्य [ 'सुथनी' ]। (१०) द्वे भृङ्गराजस्य । [भंगरा']। (११) द्वे काकमाच्या । [मकोय] ( १२ ) सप्त शतपुष्पाया. । [ 'सौंफ' ]। केचित्तु—चन्त्यद्वयं 'अन्धाहुली' त्याख्यस्येत्याहु. ।

अवाक्पुष्पी कारवी च [1]सरणा तु प्रसारिणी १५२
तस्यां कटम्भरा राजबला भद्रबलेत्यपि ।
[2]जनी जतूका रजनी जतुकृच्चक्रवर्तिनी ॥१५३॥
संस्पर्शाऽथ [3]शटी गन्धमूली षड्ग्रन्थिकेत्यपि ।
कर्चूरोऽपि पलाशोऽ[4]थ कारवेल्लः कठिल्लकः १५४
सुषवी चाथ [5]कुलकं पटोलस्तिक्तकः पटुः ।
[6]कूष्माण्डकस्तु कर्कारु[7]र्वारुः कर्कटी स्त्रियौ १५५
इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे ।
[10]चित्रागवाक्षीगोडुम्बा [11]विशाला त्विन्द्रवारुणी ।

---

(१) पञ्च प्रसारण्या । [ 'खीप' ] । (२) षट्—चक्रवर्त्तिन्या [ 'चकवत' ] । (३) पञ्च कर्चूरस्य [कचूर] (४) त्रीणि कारवेल्लस्य । [करेला] (५) चत्वारि पटोलस्य [ 'परवल' ] । (६) कूष्माण्डस्य द्वे । [कोंहड़ा'पेठा'] (७) द्वे कर्कट्या स्त्रियां । [ ककड़ी ] । (८) द्वे कटुतुम्ब्या । [ गड़तुम्बे की वेल ] स्त्रियाम् । (९) द्वे अलाब्वा. स्त्रियाम् [ 'तुम्बी' ] । (१०) द्वे चित्राया. [ कर्कटीभेदस्य 'जेठऊ ककडी' ] । (११) द्वे इन्द्रवारुण्या । [ इन्द्रायण ] ।

[1]अर्शोघ्नः सूरणः कन्दो [2]गण्डीरस्तु समाष्ठिला ।
[3]कलम्ब्युपोदि[4]काऽस्त्री तु [5]मूलकं हिल[6]मोचिका १५७
[7]वास्तूकं शाकभेदाः स्यु[8]र्दूर्वा तु शतपर्विका ।
सहस्रवीर्या भार्गव्यौ रुहाऽनन्ताऽथ सा[9]सिता १५८
गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः ।
[10]कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् १५९
[11]स्याद्भद्रमुस्तको गुन्द्रा [12]चूडाला चक्रलोचटा ।
वंशे [13]त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥१६०॥
शतपर्वा यवफलो वेणुमस्करतेजनाः ।
[14]वेणवः कीचकास्ते स्युर्ये स्वनन्त्यानिलोद्धताः १६१

(१) त्रीणि कन्दस्य [सूरण]। (२) द्वे गण्डीरस्य ['गाडरदूर्वा'] (३) एकं 'करेमु' इत्याख्यस्य। (४) एक 'पोई' इत्याख्यस्य। (५) एक मूलकस्य स्त्रियाम्। [ मूली ]। (६) एक हिलमोचिकाया। (७) एक वास्तुकस्य [ 'बथुवा' ]। कलम्ब्याद्याः शाकभेदाः। (८) षट् दूर्वायाः। (९) चत्वारि शुक्लदूर्वायाः। (१०) द्वे मुस्तकस्य [ मोथा ]। (११) द्वे मुस्तकभेदस्य [ 'नागरमोथा' ] (१२) त्रीणि मुस्ताविशेषस्य। (१३) दश वेणो [वांस]। (१४) वातपूर्णवेणू-

[1]ग्रन्थिर्ना पर्वपरुषी [2]गुन्द्रस्तेजनकः शरः ।
[3]नडस्तु धमनः पोटगलोऽ[4]थो काशमस्त्रियाम् १६२
इक्षुगन्धा पोटगलः पुंसि[5] भूम्नि तु बल्वजाः ।
[6]रसाल इक्षुस्तद्भेदाः [7]पुण्ड्रकान्तारकादयः ॥१६३॥
[8]स्याद्वीरणं वीरतरं [9]मूलेऽस्योशीरमस्त्रियाम् ।
अभयं नलदं सेव्यममृणालं जलाशयम् ॥१६४॥
लामज्जकं लघुलयमवदाहेष्टकापथे ।
[10]नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ।१६५।
[11]अस्त्री कुशं कुथो दर्भः पवित्रमथ [12]कत्तृणम् ।

---

नामैकम् । (१) वशादिग्रन्थेस्त्रीणि । ग्रन्थि. पुंसि, पर्व नान्त नपुंसके । परु: षान्तं क्लीबे । (२) त्रीणि शरस्य [ 'कूचा'–'सर' ]। (३) त्रीणि नडस्य ।
(४) त्रीणि काशस्य । काशोऽस्त्रियाम् । (५) पुंसि बहुत्वे बल्वजशब्दः [बगई]। (६) द्वे इक्षोः । [ईख] । (७) इक्षुभेदानामेकैकम् ['पौंडा']। (८) द्वे तृणभेदस्य । [ गाडर ] । (९) दशोशीरस्य वीरणमूलस्य । [ 'खस' ] । (१०) नडादय. पूर्वोक्ता नीवारगर्मुच्छ्यामाकादयश्च–तृणजातयः। (११) चत्वारि दर्भस्य ['डाभ'] (१२) षट् रौहिषतृणस्य । [ 'रोहिस' ] ।

पौरसौगन्धिकध्यामदेवजगन्धकरौहिषम् ॥१६६॥
[1]छत्त्रातिच्छत्त्रपालघ्नौ मालातृणकभूस्तृणे ।
[2]शष्पं बालतृणं [3]घासो यवसं [4]तृणमर्जुनम् ॥१६७॥
[5]तृणानां संहतिस्तृण्या [6]नड्या तु नडसंहतिः ।
[7]तृणराजाह्वयस्तालो [8]नालिकेरस्तु लांगली ॥१६८॥
[9]घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ।
[10]फलमुद्वेगमेते च [11]हिन्तालसहितास्त्रयः ॥१६९॥
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।

❀ इति वनौषधिवर्गः ॥४॥ ❀



(१) पञ्च–जलजतृणभेदस्य । (२) द्वे नवतृणस्य [ नई घास ] । (३) द्वे घासस्य । (४) द्वे तृणमात्रस्य । (५) एकं तृणसमूहस्य । (६) एकं नडसमूहस्य । (७) द्वे तालस्य । (८) द्वे नालिकेरस्य । (९) पञ्च पूगवृक्षस्य । [ सुपारी का पेड ] । (१०) एक—पूगफलस्य [ सुपारी ] । (११) हिन्तालसहिता नालिकेरादयः, खर्जूरादयश्च—तृणजातय–इत्युच्यन्ते ।



## ॐ अथ सिंहादिवर्गः ॐ

सिं[1]हो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।
[कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः ।
पुण्डरीकः पञ्चनखश्चित्रकायमृगाद्विषः ॥ ]
शा[2]र्दूलद्वीपिनौ व्याघ्रे त[3]रक्षुस्तु मृगादनः ॥१॥
व[4]राहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ।
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥२॥
क[5]पिप्लवंगप्लवगशाखामृगवलीमुखाः ।
मर्कटो वानरः कीशो वनौका अथ भ[6]ल्लुके ॥३॥
ऋक्षाच्छभल्लभल्लूका ग[7]ण्डके खड्गखड्गिनौ ।

---

( १ ) षट्—सिंहस्य । अष्टौ कण्ठीरवाद्याः क्षेपकोक्ता अपि सिंहस्य । ( २ ) त्रीणि व्याघ्रस्य । तत्र—द्वीपिशब्दो नान्तः । [ 'बाघ' ] । ( ३ ) द्वे तरक्षोः [ 'तेन्दुवा' ] 'हुण्डार'—इत्यस्येत्यन्ये । ( ४ ) द्वादश सूकरस्य [ 'सूअर' ] तत्र पोत्रि-घोणि-दंष्ट्रि-स्तब्धरोमाणो नान्ताः । (५) नव वानरस्य । वनौकश्शब्दः सान्तः पुंसि । (६) चत्वारि भल्लूकस्य । [ 'भालू'—'रीछ' ] । (७) त्रीणि गण्डकस्य [ 'गैंडा' ] । तत्र—खड्गी नान्तः ।

लुलायो[1] महिषो वाहद्विषत्कासरसैरिभाः ॥४॥
स्त्रियां शिवा[2] भूरिमायगोमायुमृगधूर्तकाः ।
शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥
ओतुर्बिडालो[3] मार्जारो वृषदंशक आखुभुक् ।
त्रयो[4] गौधारगौधेरगौधेया गोधिकात्मजे ॥६॥
श्वावित्तु[5] शल्यस्तल्लोम्नि[6] शलली शललं शलम् ।
वातप्रमीर्वातमृगः[7] कोक[8] ईहामृगो वृकः ॥७॥
मृगे[9] कुरङ्गवातायुहरिणाजिनयोनयः ।
ऐणेयं[10] मेण्याश्चर्माद्यमेणस्यै[11] णमुभे त्रिषु ॥८॥
कदली[12] कन्दली चीनश्चमूरुप्रियकावपि ।

(१) पञ्च महिषस्य । ['भैंसा'] वाहद्विषत्–तान्तः । (२) दश–जम्बूकस्य । [ गीदड़ ]। तत्र—शिवा—स्त्रियाम् । (३) पञ्च मार्जारस्य [ बिल्ली ]। आखुभुक्–जान्त पुंसि । (४) गौधेयस्य त्रीणि । (५) द्वे शल्यस्य [ सेह ]। (६) शल्यरोम्णस्त्रीणि । शलली स्त्रियाम् । ( ७ ) द्वे मृगभेदस्य पुंसि । (८) त्रीणि वृकस्य । [ भेड़िया ]। (९) पञ्च हरिणस्य । (१०) एकं–हरिणीचर्मादेः त्रिषु । (११) एकं हरिणचर्ममांसादे –त्रिषु । (१२) अजिनयोनिहरिण-

समूरुश्चेति हरिणा अमी अजिनयोनयः ॥९॥
[1]कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।
गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥१०॥
[2]गन्धर्वः शरभो रामः सृमरो गवयः शशः ।
इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः॥११॥
[ [3]अधोगन्ता तु खनको वृषः पुंध्वज उन्दुरः ]
उन्दुरुर्मूषकोऽप्याखुर्[4]गिरिका[5] बालमूषिका ।
[5]सरटः कृकलासः [6]स्यान्मुसली गृहगोधिका॥१२॥
[7]लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ।
[8]नीलङ्गुस्तु [9]कृमिः कर्णजलौकाः शतपद्युभे ॥१३॥

भेदानामेकैकम् । (१) द्वादश मृगविशेषाणाम् । (२) उक्ता —सिंहादयो मृगादय , गवादयश्च वक्ष्यमाणा —पशुजातय·—पशवः । गन्धर्वादयो मृगजातय । (३) प्रक्षिप्ते पञ्चभिः सह त्रयोऽमी मूषकस्य । [ 'चूहा' ] । (४) स्वल्पमूषकजातेर्द्वे । (५) द्वे सरटस्य ['गिर्गिट'] । (६) द्वे मुसल्या· ['छिपकली'—'विस्तोइया'] । (७) चत्वारि लूताया । [ 'मकड़ी' ] । (८) द्वे नीलङ्गोः, [सोनकीड़ा] पुंसि । (९) द्वे कर्णजलौकाया स्त्रियाम् । सा च सान्ताऽऽदन्ता वा ।

[1]वृश्चिकः शूककीटः स्या[2]दलिद्रोणौ तु वृश्चिके ।
[3]पारावतः कलरवः कपोतोऽथ [4]शशादनः ॥१४॥
पत्त्री श्येन [5]उलूके तु वायसारातिपेचकौ ।
[दिवान्धः कौशिको घूको दिवाभीतो निशाटनः]
[6]व्याघ्राटः स्याद्भरद्वाजः [7]खञ्जरीटस्तु खञ्जनः ॥१५॥
[8]लोहपृष्ठस्तु कङ्कः स्यादथ [9]चाषः किकीदिविः ।
[10]कलिङ्गभृङ्गधूम्याटा अथ [11]स्याच्छतपत्रकः ॥१६॥
दार्वाघाटोऽथ [12]सारङ्गः स्तोकश्चातकः समाः ।
[13]कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥१७॥

---

[ 'कंसला' कनखजूरा ]। (१) द्वे वृश्चिकस्य ऊर्णाभक्षकस्य [ भ्रमग्भेदस्य ]। (२) त्रीणि वृश्चिकस्य ['बिच्छू'] द्रुणोऽपि । (३) त्रीणि पारावतस्य। ['परेवा'] । (४) त्रीणि श्येनस्य । [ 'बाज' ]। पत्री नान्त पुंसि । (५) अष्टौ घूकस्य । [ 'उल्लू' ]। (६) द्वे भरद्वाजस्य । [ 'भरदुखा' ]। (७) द्वे खञ्जनस्य । (८) द्वे कङ्कस्य । (९) द्वे चापस्य । (१०) त्रीणि भृङ्गस्य । (११) द्वे काष्ठकुट्टस्य [ 'कठफोरा'–'खुडियो खाती' ]। (१२) त्रीणि चातकस्य ['पपीहा'] । (१३) चत्वारि कुक्कुटस्य । [ 'मुर्गा' ]। ।

[1]चटकः कलविङ्कः स्यात्तस्य [2]स्त्री चटका तयोः ।
[3]पुमपत्ये चाटकैरः [4]स्त्र्यपत्ये चटकैव हि ॥१८॥
[5]कर्करेटुः करेटुः स्यात्[6]कृकणक्रकरौ समौ ।
[7]वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥१९॥
[8]काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।
ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥२०॥
स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः ।
[9]द्रोणकाकस्तु काकोलो [10]दात्यूहः कालकण्टकः ।
[11]आतायिचिल्लौ [12]दाक्षाय्यगृध्रौ [13]कीरशुकौ समौ २१

---

(१) द्वे चटकस्य [ 'चिडा' ]। (२) एक चटकायाः [ 'चिडी' ]। (३) चटकपुमपत्यस्यैकम्। (४) चटकस्य स्त्र्यपत्येऽपि—चटका—एव। (५) द्वे कर्करेटुपक्षिणः [ 'कोचरी' ]। (६) द्वे कृकणस्य पक्षिभेदस्य। (७) चत्वारि कोकिलस्य [कोयल]। (८) दश काकस्य ['कौवा'] (९) द्वे, द्रोणकाकस्य [ 'डोडकाक' ]। (१०) द्वे दात्यूहस्य [ 'काकातुआ' ] (११) द्वे चिल्लस्य। [ 'चील्ह' ]। आतायी नान्तः। (१२) द्वे गृध्रस्य। (१३) द्वे शुकस्य [ सुग्गा ]।

[1]क्रुङ्क्रौञ्चोऽथ [2]बकः कह्वः [3]पुष्कराह्वस्तु सारसः ।
[4]कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥२२॥
[5]कादम्बः कलहंसः स्यादु[6]त्क्रोशकुररौ समौ ।
[7]हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥२३॥
[8]राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।
[9]मलिनैर्मल्लिकाक्षास्ते [10]धार्तराष्ट्राः सितेतरैः ॥२४॥
[11]शरारिराटिराडिश्च [12]बलाका बिसकण्ठिका ।
[13]हंसस्य योषिद्वरटा [14]सारसस्य तु लक्ष्मणा ॥२४॥
[15]जतुकाऽजिनपत्रा [16]स्यात्परोष्णी तैलपायिका ।

---

(१) द्वे क्रौञ्चपक्षिणः, क्रुङ्, क्रुञ्चो, क्रुञ्च । (२) द्वे बकस्य [ बगुला ]। (३) द्वे सारसस्य [ सारस ]। (४) चत्वारि चक्रवाकस्य, [ 'चकवा' ]। (५) द्वे कादम्बस्य [ बत्तक ]। (६) द्वे कुररस्य । (७) चत्वारि हंसस्य । (८) एकं राजहंसस्य । (९) एकं हंसभेदस्य । (१०) एकं कृष्णचञ्चुचरणस्य हंसविशेषस्य। (११) त्रीणि 'आडि' इत्याख्यस्य । (१२) द्वे बलाकायाः । (१३) हंसस्त्रिया एकम् । (१४) सारसस्त्रिया एकम् । (१५) द्वे चर्मचटकायाः [ 'चमचेड़' ]। (१६) द्वे परोष्ण्याः ।

[1]वर्वणा मक्षिका नीला [2]सरघा मधुमक्षिका ॥२६॥
[3]पतङ्गिका पुत्तिका [4]स्याद्दंशस्तु वनमक्षिका ।
[5]दंशी तज्जातिरल्पा [6]स्याद्गन्धोली वरटाद्वयोः २७
[7]भृंगारी झीरुका चीरी झिल्लिका च समा इमाः ।
[8]समौ पतंगशलभौ [9]खद्योतो ज्योतिरिङ्गणः ॥२८॥
[10]मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
द्विरेफपुष्पलिड्भृंगषट्पदभ्रमरालयः ॥२९॥
[11]मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्यपि ।३०।

---

(१) त्रीणि नीलमक्षिकायाः । (२) द्वे मधुमक्षिकायाः । (३) द्वे पतङ्गिकायाः । [मक्षिकाभेदस्य 'तितली']। (४) वनमक्षिकाया द्वे । (५) मक्षिकाविशेषस्यैकम् । (६) द्वे वरटायाः [ बरें, 'भिरड़'–'टांटिया' ] वरटा–स्त्रीपुंसयोः । (७) चत्वारि झिल्लिकायाः । [ 'किसारी'–झिंगुर' ]। (८) द्वे—पतङ्गस्य [ 'पत्तिङ्गा' ]। (९) द्वे खद्योतस्य । [ 'पटबीजणा' 'जुगनू']। (१०) एकादश भ्रमरस्य । मधुलिट्-हान्त । एवं पुष्पलिट् । (११) नव मयूरस्य । [ मोर ] बर्हि-केकि-शिखण्ड्यनुलासिनो नान्ताः ।

केका[1] वाणी मयूरस्य समौ[2] चन्द्रकमेचकौ ।
शिखा[3] चूडा शिखण्डस्तु[4] पिच्छबर्हे नपुंसके ।३१।
खगे[5] विहंगविहगविहंगमविहायसः ।
शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥३२॥
पतत्त्रिपत्त्रिपतगपतत्पत्त्ररथाण्डजाः ।
नगौकोवाजिविकिरविविष्किरपतत्त्रयः ॥३३॥
नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।
तेषां[6] विशेषा हारीतो मद्गुः कारण्डवः प्लवः३४
तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्चकोरकः ।
कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥३५॥
गरुत्[7]पक्षच्छदाः पत्त्रं पतत्त्रञ्च तनूरुहम् ।

( १ ) मयूरध्वनेरेकम् । (२) चन्द्रकस्य द्वे । (३) द्वे मयूरशिखायाः । (४) द्वे मयूरपिच्छस्य । ['मोरपाख']। (५) सप्तविंशति. पक्षिणाम् । तत्र—विहायाः सान्त. पुंसि—एव नगौका अपि । पक्षि वाजि-पतत्त्रि पत्त्रिणो नान्ता. । 'पतत्त्रि'शब्द इकारान्तः । पतत्—पित्सत्—गरुत्मच्छब्दास्तान्ता.। (६) पक्षिजातिविशेषाणां त्रयोदश। आदिना शारिकादयः [ मैना ]। (७) षट् पक्षाणाम्, [ 'पांख' ]।

[1]स्त्री पक्षतिः पक्षमूलं [2]चञ्चुस्त्रोटिरुभे स्त्रियौ ३७
[3]प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः।
पे[4]शिकोषो द्विहीनेऽण्डं [5]कुलायो नीडमस्त्रियाम्
[6]पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः।
[7]स्त्रीपुंसौ मिथुनं द्वन्द्वं [8]युग्मं तु युगलं युगम्॥३८॥
[9]समूहनिवहव्यूहसन्दोहविसरव्रजाः।
स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः॥३९॥
समुदायः समुदयः समवायश्चयो गणः।
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्॥४०॥

---

(१) द्वे पक्षमूलस्य, तत्र पक्षति स्त्रियाम्। (२) द्वे पक्षितुण्डस्य—['चोंच']—स्त्रियाम्। (३) पक्षिगतिविशेषाणामेकैक नामधेयम्। (४) त्रीणि—अण्डस्य–[ अण्डा ] तत्र पेशी स्त्री, कोश, कोषो वाऽस्त्री = पुनपुंसकयोः। (५) पक्षिवासस्य द्वे—[ 'घोंसला' ]। नीडमस्त्री। (६) सप्त बालानाम्। ['बच्चा']। (७) स्त्री–युगलस्य, [ 'नर–मादीका–जोड़ा' ]। (८) त्रीणि युग्मस्य। [ 'जोडा' ]। (९) द्वाविंशति —(२२) समूहस्य —[ झुण्ड' ]। तत्र—संहतिः—स्त्रियाम्। वृन्द-निकुरम्ब कदम्बानि—क्लीबे।

[1]वृन्दभेदाः समैर्वर्गः सङ्घसार्थौ तु जन्तुभिः ।
सजातीयैः कुलं यूथं तिरश्चां पुन्नपुंसकम् ॥४१॥
पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम् ।
स्यान्निकायः [2]पुञ्जराशी तूत्करः कूटमस्त्रियाम् ४२
[3]कापोतशौकमायूरतैत्तिरादीनि तद्गणे ।
[4]गृह्यासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ।४३।

❀ इति सिंहादिवर्गः ॥५॥ ❀



(१) वृन्दविशेषा इदानीमुच्यन्ते,—तत्र—समाना वृन्द 'वर्ग' इत्युच्यते । सङ्घसार्थौ—जन्तूना समूहे बोध्यौ । वणिक्संघोऽपि—सार्थः । सजातीयानां समूहः—कुलम् । तिरश्चा = पक्ष्यादीना समूहः—यूथः—पुंनपुंसकयो. । पशूना समूहः—समजः । अन्येषा = पशुभिन्नानां संघ.—समाजः । सधर्मिप्राणिसमूहे—निकायः । (२) धान्यादिराशेश्चत्वारि । तत्र—कूटमस्त्रियां, शेषा पुंसि । ( ३ ) कपोतादिसंघस्यैकैम् पृथक्—पृथक् । (४) द्वे गृहाश्रितपक्षिमृगा दीनाम् । [ 'पालतू पक्षी'—तोता आदि ] * इति सिंहादिवर्गः *

## ❀ अथ मनुष्यवर्गः ❀

[1]मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
[2]स्युः पुमांसः पञ्चजनाःपुरुषाः पूरुषा नरः ॥१॥
[3]स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥२॥
[4]विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ३
सुन्दरी रमणी रामा [5]कोपना सैव भामिनी ।
[6]वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥४॥
[7]कृताभिषेका महिषी [8]भोगिन्योऽन्या नृपस्त्रियः ।
[9]पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥५॥

---

(१) षट् मनुष्यजातिमात्रस्य नामानि । (२) पञ्च पुरुषस्य । (३) एकादश स्त्रीमात्रस्य । (४) अथ स्त्रीविशेषा उच्यन्ते । तत्र—उत्तमस्त्रीणां द्वादश भेदाः । (५) द्वे कोपनायाः । (६) चत्वारि श्रेष्ठस्त्रियाः । (७) द्वे पट्टाभिषिक्तराजपत्न्याः [ 'पटरानी' ] । (८) राजस्त्रीसामान्यस्यैकम् । (९) सप्त विवाहितायाः स्त्रियाः ।

भार्या जायाथ पुंभूम्नि दाराः स्यात्तु [१]कुटुम्बिनी ।
पुरन्ध्री [२]सुचरित्रा तु सती साध्वी पतिव्रता ।६।
[३]कृतसापत्निकाऽध्यूढाऽधिविन्नाथ [४]स्वयंवरा ।
पतिंवरा च वर्या च [५]कुलस्त्री कुलपालिका ॥७॥
[६]कन्या कुमारी [७]गौरी तु नग्निकाऽनागतार्तवा ।
[८]स्यान्मध्यमा दृष्टरजा[९]स्तरुणी युवतिः समे ॥८॥
[१०]समाः स्नुषा जनी वध्व[११]श्चिरिण्टी तु सुवासिनी ।
[१२]इच्छावती कामुका स्याद् [१३]वृषस्यन्ती तु कामुकी ९
[१४]कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका ।

(१) द्वे—पतिपुत्रशालिन्या. सौभाग्यवत्याः । (२) चत्वारि पतिव्रताया । (३) त्रीणि—अनेकभार्यस्य–प्रथमविवाहितायाम् । (४) त्रीणि—स्वेच्छया-कृतपतिवरणायाः । (५) कुलीनमहिलायाः सत्या द्वे । (६) द्वे कुमार्या. ।

(७) त्रीणि—अदृष्टरजस्कायाः कन्यायाः । (८) द्वे सद्योजातरजोदर्शनाया । (९) द्वे युवत्याः—स्त्रियाम् । (१०) त्रीणि–पुत्रवध्वा । (११) द्वे प्राप्तयौवनायाः सौभाग्यवत्या. [ 'सुहासणी' ] 'प्राप्तयौवनाया पितृगृहस्थाया' इति केचित् । (१२) द्वे वस्त्राभूषणादीच्छावत्याः । (१३) द्वे—मैथुनेच्छावत्या । (१४) एक स्वपरपुरुषमभिसरन्त्याः ।

पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ॥१०॥
स्वैरिणी पांसुला च स्याद[2]शिश्वी शिशुना विना ।
[3]अवीरा निष्पतिसुता [4]विश्वस्ताविधवे समे ॥११॥
[5]आलिः सखी वयस्याऽथ [6]पतिवत्नी सभर्तृका ।
[7]वृद्धा पलिक्नी [8]प्राज्ञी तु [9]प्रज्ञा प्राज्ञा तु धीमती ॥१२॥
[10]शूद्री शूद्रस्य भार्या स्याच्[11]छूद्रा तज्जातिरेव च ।
[12]आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥१३॥
[13]अर्याणी स्वयमर्या स्यात्[14]क्षत्रिया क्षत्रियाण्यपि ।
[15]उपाध्यायाप्युपाध्यायी स्याद[16]आचार्यापि च स्वतः ॥१४॥

---

(१) अष्टौ—कुलटाया [ 'हरजाई' ]। (२) एकमपत्यरहितायाः। (३) पतिपुत्ररहिताया एकम्। (४) द्वे विधवायाः। (५) त्रीणि सख्याः। (६) द्वे जीवद्भर्तृकायाः। (७) द्वे पक्वकेश्याः। (८) द्वे—पण्डितायाः। (९) द्वे—प्रशस्तबुद्धिशालिन्याः। (१०) एकं भिन्नजातीयाया अपि शूद्रभार्यायाः। (११) एकमन्यभार्याया अपि शूद्रजातीयायाः। (१२) द्वे—आभीर्याः, जातौ पुंयोगे वा। ['अहीरिन']। (१३) वैश्यजातीयाया द्वे। (१४) क्षत्रियजात्युद्भूताया द्वे। (१५) द्वे स्वयं विद्योपदेशिन्याः [उपदेशिका] (१६) एकं मन्त्रादिव्याख्यात्र्याः।

[1]आचार्यानी तु पुंयोगे स्यादर्यी[2] क्षत्रियी[3] तथा ।
[4]उपाध्यायान्युपाध्यायीपोटा[5] स्त्रीपुंसलक्षणा १५
[6]वीरपत्नी वीरभार्या वीरमाता[7] तु वीरसूः ।
[8]जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥१६॥
[9]स्त्री नग्निका कोटवी स्याद्दूती[10] संचारिके समे ।
[11]कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा ॥१७॥
[12]सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।

---

( १ ) आचार्यपत्न्या एकम् । ( २ ) वैश्यपत्न्याः = अन्यजातीयाया अपि—एकम् । (३) अन्यजातीयाया अपि क्षत्रियपत्न्या एकम् । (४) द्वे — उपाध्यायपत्न्याः । (५) एकं—स्तनश्मश्रुलोमादिमत्याः । (६) द्वे वीरपत्न्याः । (७) द्वे वीरजनन्याः । (८) चत्वारि—जातापत्यायाः । (९) द्वे नग्नायाः । (१०) द्वे दूत्याः । (११) काषायवस्त्रधारिण्या विधवाया अर्धजरत्या एकम् । (१२) परगृहे स्थित्वा शिल्पकर्म कुर्वाणायाः स्वतन्त्रायाः [ अदास्याः ] एकं नाम । तदुक्तं कात्येन—

"चतुःषष्टिकलाभिज्ञा रूपशीलादिशालिनी ।
प्रसाधनोपचारज्ञा 'सैरन्ध्री' परिकीर्त्तिता ॥" इति ।

[1]आसिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरचारिणी १८
[2]वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः।
[3]सत्कृता वारमुख्या स्यात्[4]कुट्टनी शम्भली समे १९
[5]विप्रश्निका त्वीक्षणिका दैवज्ञाऽथ रज[6]स्वला।
स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥२०॥
ऋतुमत्यप्युदक्यापि स्याद्रजः[7] पुष्पमार्तवम्।
[8]श्रद्धालुर्दोहदवती नि[9]ष्कला विगतार्तवा ॥२१॥
[10]आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी।
[11]गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे॥२२॥
[12]पुनर्भूर्दिधिषूरूढा द्विस्तस्या[13] दिधिषुः पतिः।

(१) अन्तःपुरवासिन्या दास्या युवत्या एक नाम। (२) चत्वारि वेश्याया·। (३) लोकसत्कृताया वेश्याया एकम्। (४) द्वे कुट्टन्याः। [ 'कुटनी' ]। (५) त्रीणि दैवज्ञाया। (६) अष्टौ रजस्वलाया। (७) त्रीणि स्त्रीरजस। तत्र रज सान्त—नपुसके। (८) द्वे—गर्भसम्बन्धादभिलाषशालिन्याः। (९) विगतार्त्तवाया द्वे। (१०) चत्वारि गर्भिण्या। (११) गणिकानां समूह —गाणिक्यम्। गर्भिणीनां समूहो—गार्भिणम्। युवतीनां समूहो—यौवत, यौवनञ्च। (१२) द्विवारं सस्कृताया द्वे। तदुक्त—'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुन.।' इति। (१३) पुनर्भूपत्युरेकम् पुसि।

स तु[१] द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी॥२३
[२]कानीनः कन्यकाजातः सुतोऽथ [३]सुभगासुतः।
सौभागिनेयः स्यात्[४]पारस्त्रैणेयस्तु परस्त्रियाः॥२४
[५]पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः।
सुतो [६]मातृष्वसुश्चैवं [७]वैमात्रेयो विमातृजः॥२५॥
[८]अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः।
कौलटेरः कौलटेयो [९]भिक्षुकी तु सती यदि॥२६॥
तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः।
[१०]आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी२७
[११]आहुर्दुहितरं सर्वे[१२]ऽपत्यं तोकं तयोः समे।

---

(१) पुनर्भूप्रधानभार्यस्य पुंस एकम्। (२) द्वे—कन्यकासुतस्य। (३) सुभगा पुत्रस्य द्वे। (४) परभार्यामुत्पादितस्य पुत्रस्यैकम्। (५) द्वे पितृस्वसु पुत्रस्य, [ 'भुवा का पुत्र' ]। (६) द्वे मातृष्वसुः सुतस्य। [ 'मौसी का बेटा' ]। (७) विमातुरपत्यस्य द्वे। (८) पंच कुलटापुत्रस्य। (९) सत्या भिक्षुक्याः पुत्रस्य द्वे। (१०) पंच पुत्रस्य। (११) अमी पुत्रादयः स्त्रियां पुत्रीमाहुः। आत्मजा, तनयासुता, पुत्री। (१२) तनयदुहित्रोर्द्वे क्लीबे।

[1]स्वजाते त्वौरसोरस्यौ [2]तातस्तु जनकः पिता॥२८
[3]जनयित्री प्रसूर्माता जननी [4]भगिनी स्वसा।
[5]ननान्दा तु स्वसापत्युर्[6]नप्त्रीपौत्री सुतात्मजा २९
[7]भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्।
[8]प्रजावती भ्रातृजाया [9]मातुलानी तु मातुली॥३०॥
[10]पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः।
[11]पितुर्भ्राता पितृव्यः स्यान्[12]मातुर्भ्राता तु मातुलः ३१
[13]श्यालाः स्युर्भ्रातरः पत्न्याः [14]स्वामिनो देवृदेवरौ।

---

(१) स्वस्मादुत्पन्नस्य पुत्रस्य ['सगा बेटा']। (२) त्रीणि जनकस्य [पिता]। (३) चत्वारि मातुः। (४) द्वे भगिन्या। ['बहन']। (५) एकं पत्युर्भगिन्या, ['नँनद']। (६) त्रीणि पुत्रदुहित्रोरपत्यस्य। (७) परस्पर भ्रातृपत्नीनां स्त्रियाम्। ['देवरानी-जेठानी']। (८) द्वे भ्रातुर्धर्मपत्न्या ['भौजाई']। (९) द्वे—मातुलभार्यायां ['मामी']। (१०) पत्युर्माता, पत्न्याश्च माता—'श्वश्रू'—स्त्रियाम्। एव—पत्यु-पिता, पत्न्याश्च पिता—'श्वशुर' पुंसि। [ सास और ससुर ]। (११) द्वे पितृव्यस्य ['चाचा']। (१२) द्वे मातुलस्य [ मामा ]। (१३) पत्नीभ्रातुरेकम्। [ साला ]। (१४) पत्यु कनिष्ठभ्रातुर्द्वे।

[1]स्वस्रीयो भागिनेयः स्या[2]ज्जामाता दुहितुः पतिः ॥
[3]पितामहः पितृपिता [4]तत्पिता प्रपितामहः ।
[5]मातुर्मातामहाद्येवं [6]सपिण्डास्तु सनाभयः ॥३३॥
[7]समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।
[8]सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥३४॥
[9]ज्ञातेयं बन्धुता तेषां क्रमाद्‌ भावसमूहयोः ।
[10]धवः प्रियः पतिर्भर्ता [11]जारस्तूपपतिः समौ ॥३५॥
[12]अमृते जारजः कुण्डो [13]मृते भर्तरि गोलकः ।
[14]भ्रात्रीयो भ्रातृजो [15]भ्रातृभगिन्यौ भ्रातरावुभौ ३६

[ देवर ] । पत्युर्ज्येष्ठभ्राता तु श्वशुर एव [ 'ससुर' ] । (१) द्वे भगिनीसुतस्य [ 'भानजा'–'भगिना' ] । (२) द्वे जामातु [ 'जमाई' ] । (३) द्वे पितामहस्य [ 'दादा' ] । (४) एकं प्रपितामहस्य [ 'परदादा' ] । (५) मातामहादेरेकैकम् । ( ६ ) द्वे—सपिण्डानाम् । ( ७ ) चत्वारि एकमातृजातानाम् । (८) षट् सगोत्राणाम्—पुंसि । [ 'गोतिया' ] । (९) ज्ञातिभावस्य बन्धुसमूहस्य चैकैकम् । बन्धुता—स्त्रियाम् । (१०) चत्वारि भर्तुः । (११) जारस्य द्वे ['यार'] । (१२) पत्यौ जीवति जारजातस्य पुत्रस्यैकम् । (१३) एकं—विधवायामुत्पन्नस्य । (१४) द्वे भ्रातुष्पुत्रस्य । (१५) सहोक्तौ—भ्रातृभगिन्योर्द्वे । द्विवचनान्तौ । [ भाई–बहिन ]

[१]मातापितरौ पितरौ मातरापितरौ प्रसूजनयितारौ
[२]श्वश्रूश्वशुरौ श्वशुरौ [३]पुत्रौ पुत्रश्च दुहिता च ॥३७
[४]दम्पती जम्पती जायापती भार्यापती च तौ ।
[५]गर्भाशयो जरायुः स्यादु[६]ल्बं च कललोऽस्त्रियाम् ॥
[७]सूतिमासो वैजननो [८]गर्भो भ्रूण इमौ समौ ।
[९]तृतीया प्रकृतिः शण्ढः क्लीबः पण्डो नपुंसके॥३९
[१०]शिशुत्वं शैशवं बाल्यं [११]तारुण्यं यौवनं समे ।
[१२]स्यात्स्थाविरं तु वृद्धत्वं [१३]वृद्धसङ्घेऽपि वार्धकम्॥४०॥

---

(१) सहोक्तौ—मातापित्रोर्द्वे, द्विवचनान्तौ [ मा–बाप ] । (२) सहोक्तौ–श्वश्रू–श्वशुरयोर्द्वे । (३) सहोक्तौ–पुत्रकन्ययोर्द्वे । (४) सहोक्तौ–जायापत्योश्चत्वारि । [ 'पति पत्नी' ] । (५) द्वे गर्भाशयस्य । (६) द्वे शुक्र-शोणितसम्पातस्य । 'चत्वारि गर्भवेष्टनस्ये'ति परे [ जेर ] । कललोऽस्त्रियाम् । (७) प्रसवमासस्य द्वे । [ पूरा महीना ] । (८) द्वे गर्भस्य । (९) पञ्च–नपुंसकस्य नामानि । तत्र—'तृतीया प्रकृति' स्त्रियाम् । (१०) त्रीणि बाल्या-वस्थायाः । (११) द्वे तारुण्यावस्थायाः ['जवानी'] । (१२) द्वे वृद्धावस्थायाः । ['बुढ़ापा'] (१३) द्वे वृद्धसमूहस्य क्लीबे ।

[1]पलितं जरसा शौक्ल्यं केशादौ [2]विस्रसा जरा ।
[3]स्यादुत्तानशया डिम्भा स्तनपा च स्तनन्धयी ॥४१
[4]बालस्तु स्यान्माणवको [5]वयस्थस्तरुणो युवा ।
[6]प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥४२॥
[7]वर्षीयान्दशमी ज्यायान् [8]पूर्वजस्त्वग्रियोऽग्रजः ।
[9]जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥४३॥
[10]अमांसो दुर्बलश्छातो [11]बलवान्मांसलोऽंसलः ।
[12]तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ॥४४

---

(१) जरया केशादौ शौक्ल्यस्यैकम् । (२) द्वे जराया । (३) चत्वारि बालिकाया·—त्रिषु । ['दूधमुही बच्ची'] । (४) द्वे बालस्य—त्रिषु । (५) त्रीणि यून [ 'जवान' ] । त्रिषु । ( ६ ) षट् वृद्धस्य-त्रिषु । तत्र प्रवयाः सान्तः पुसि । जरन् तान्तः । ( ७ ) त्रीणि अतिवृद्धस्य । वर्षीयोज्यायसौ सान्तौ पुसि । दशमी—नान्त. पुसि । ( ८ ) त्रीणि ज्येष्ठस्य—भ्रात्रादे. त्रिषु । ( ९ ) कनिष्ठस्य पञ्च त्रिषु । यवीयान् सान्त. पुसि । (१०) त्रीणि दुर्बलस्य—त्रिषु । [ 'दुबला' ] (११) बलवतस्त्रीणि—त्रिषु । बलवान्—तान्तः । (१२) पञ्च स्थूलस्य—त्रिषु । तुन्दी—नान्त· ।

[1]अवटीटोऽवनाटश्चाऽवभ्रटो नतनासिके ।
केशव[2]: केशिकः केशी [3]वलिनो वलिभः समौ ॥४५
[4]विकलाङ्गस्त्वपोगण्डः [5]खर्वो ह्रस्वश्च वामनः ।
[6]खरणाः स्यात्खरणसो [7]विग्रस्तु गतनासिकः ॥४६
[8]खुरणाः स्यात्खुरणसः [9]प्रज्ञुः प्रगतजानुकः ।
[10]ऊर्ध्वज्ञुरूर्ध्वजानुः [11]स्यात्संज्ञुः संहतजानुकः ॥४७॥
[12]स्यादेडे बधिरः [13]कुब्जे गडुलः [14]कुकरे कुणिः ।

---

( १ ) त्रीणि चिपिटनासस्य—त्रिपु । ( २ ) प्रशस्तकेशस्य त्रीणि—त्रिपु । केशी नान्त । ( ३ ) द्वे वलिशालिनः—त्रिपु । ( ४ ) विकलाङ्गस्य = न्यूनाधिकाङ्गस्य द्वे । त्रिपु । ( ५ ) त्रीणि वामनस्य त्रिपु । [ 'बौना' ]। ( ६ ) तीक्ष्णनासिकस्य द्वे—त्रिपु । खरणश्शब्द सान्तः । ( ७ ) द्वे विगतनासिकस्य—त्रिपु । (नकटा') ( ८ ) खुरसदृशनासिकस्य द्वे—त्रिपु । खुरणश्शब्द सान्ता पुंसि । ( ९ ) वातादिना विगतजानुकस्य द्वे—त्रिपु । (१०) द्वे ऊर्ध्वजानुकस्य—त्रिपु (११) द्वे मिलितजानुकस्य पुंस'—त्रिपु । (१२) द्वे श्रवणशक्तिहीनस्य—त्रिपु ('बहिरा') । (१३) द्वे कुब्जस्य—त्रिपु [ 'कुबड़ा' ] । (१४) रोगादिदूषितहस्तस्य द्वे—त्रिपु ।

[1]पृश्निरल्पतनौ [2]श्रोणः पङ्गौ [3]मुण्डस्तु मुण्डिते॥४८
[4]वलिरः केकरे खोडे [5]खञ्जस्त्रिषु जरावराः।
[6]जडुलः कालकः पिप्लुस्[7]तिलकस्तिलकालकः॥४९॥
[8]अनामयं स्यादारोग्यं [9]चिकित्सा रुक्प्रतिक्रिया।
[10]भेषजौषधभैषज्यान्यगदो जायुरित्यपि॥५०॥
[11]स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः।
[12]क्षयः शोषश्च यक्ष्मा च [13]प्रतिश्यायस्तु पीनसः॥५१
स्त्री [14]क्षुत्क्षुतं क्षवः पुंसि [15]कासस्तु क्षवथुः पुमान्।

(१) द्वे अल्पकायस्य पुंसि—त्रिषु। (२) द्वे पङ्गो. त्रिषु। ['पांगला', 'पङ्गुल']। (३) द्वे मुण्डितस्य—त्रिषु। (४) द्वे विकृतनेत्रस्य—त्रिषु। ['ऐंचाताना']। (५) जराशब्दादवराः = अर्वांचीना.—उत्तानशयादयः = 'त्रिषु' ज्ञेयाः।

(६) त्रीणि शरीरचिह्नभेदस्य। ['लहसुन']। (७) द्वे देहस्थ 'तिल' चिह्नस्य। (८) द्वे आरोग्यस्य। (९) द्वे चिकित्सायास्त्रियाम्। (१०) पञ्चौषधस्य ['दवा']। (११) सप्त रोगस्य। स्त्रिया रुक्छब्दो जान्तः। (१२) त्रीणि राजयक्ष्मणः। यक्ष्मा—नान्तः पुंसि। (१३) द्वे पीनसस्य ['जुकाम' 'सर्दी']। (१४) त्रीणि छिक्काया ['छींक'] क्षुत्—स्त्रियां तान्त.। (१५) द्वे कासरोगस्य ['खांसी']

[1]शोफस्तु श्वयथुः शोथः [2]पादस्फोटो विपादिका॥५२
[3]किलाससिध्मे [4]कच्छ्वां तु पाम पामा विचर्चिका।
[5]कण्डूः खर्जूश्च कण्डूया [6]विस्फोटः पिटकः स्त्रियाम्
[7]व्रणोऽस्त्रियामीर्ममरुः [8]क्लीबे नाडीव्रणः पुमान्।
[9]कोठो मण्डलकं कुष्ठं[10]श्वित्रे [11]दुर्नामकार्शसी ॥५४॥
[12]आनाहस्तु विबन्धः स्याद् [13]ग्रहणी रुक्प्रवाहिका।
[14]प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः॥५५

---

(१) त्रीणि शोथस्य ['सूजन']। (२) पादस्फोटस्य द्वे [ बिवाई'] विपादिका—स्त्रियाम्। (३) द्वे सिध्मस्य। [ सेहुंआ रोग ] (४) चत्वारि कच्छूरोगस्य। कच्छू —स्त्रियाम्। पाम—नान्त क्लीबे। पामा—स्त्रियां—नान्ता, आबन्तो वा। ['पाँव' रोग]। (५) त्रीणि कण्डूरोगस्य स्त्रियाम् ['खुजली']। (६) द्वे पिटकस्य त्रिषु। ['फोड़ा-फुन्सी'] (७) त्रीणि व्रणस्य ['घाव'] व्रणोऽस्त्रियाम्, अरु सान्तं क्लीबे। (८) एक नाडीव्रणस्य (९) द्वे मण्डलकुष्ठस्य (१०) द्वे श्वेतकुष्ठस्य क्लीबे। ['सफेदकोढ'] (११) द्वे अर्शस। [बवासीर]। (१२) द्वे आध्मानस्य ['पेट फूलना']। (१३) द्वे ग्रहणीरोगस्य। (१४) त्रीणि वमनस्य। तत्र वमथुः पुमान्।

[1]व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगन्दराः ।
[ [2]श्लीपदं पादवल्मीकं केश[3]घ्नस्त्विन्द्रलुप्तकः ]
[4]अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वं शुक्रावधेस्त्रिषु ॥५६॥
रो[5]गहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सके ।
[6]वार्तो निरामयः कल्यः उल्लाघो निर्गतो गदात् ॥५७
[7]ग्लानग्लास्नू [8]आमयावी विकृतो व्याधितोऽपटुः ।
आतुरोऽभ्यमितोऽभ्यान्तः [9]समौ पामनकच्छुरौ ॥
[10]दद्रुणो दद्रुरोगी स्या[11]दर्शोरोगयुतोऽर्शसः ।

(१) विद्रध्यादिरोगविशेषाणामेकैकम् । विद्रधिः—स्त्रियाम् । 'अश्मरी' 'मूत्रकृच्छ्र'मिति पर्यायशब्दावित्येके । पृथग्रोगाविमाविति वैद्याः । (२) द्वयं श्लीपदस्य ['फीलपाँव'] । (३) द्वे इन्द्रलुप्तस्य ['गंज'] । (४) इतः परं शुक्रपर्यन्त 'त्रिषु' इत्यधिकारः (५) पञ्च वैद्यस्य—त्रिषु = वाच्यलिङ्गाः । तत्र रोगहारी—नान्त. । भिषक्—चान्तः । (६) चत्वारि रोगमुक्तस्य—त्रिषु । (७) द्वे ग्लानस्य—पुंसि [ 'उदास' 'म्लानमुख' 'माड़ा' ] । (८) सप्त रोगिणः त्रिषु । आमयावी—नान्त. । (९) द्वे पामनस्य । [ 'पाँवरोगी' ] । (१०) द्वे दद्रुरोगयुक्तस्य त्रिषु । [ दादवाला ] (११) द्वे अर्शोरोगिणः—त्रिषु

वातकी[1] वातरोगी स्यात्सातिसारो[2]ऽतिसारकी ५९
स्युः[3] क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ।
उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ६०
न्युब्जो[6] भुग्ने रुजा वृद्धनाभौ तुन्दिलतुन्दिभौ ।
किलासी सिध्मलोऽन्धोऽदृङ् मूर्च्छाले मूर्तमूर्च्छितौ
शुक्रं[11] तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।
मायुः[12] पित्तं कफः[13] श्लेष्मा स्त्रियां तु त्वगसृग्धरा[14] ६२
पिशितं[15] तरसं मांसं पललं क्रव्यमामिषम् ।

['ववासीर रोगी'] (१) द्वे वातरोगिण । ना ताविमौ। (२) द्वे अतीसाररोगिण । (३) त्रीणि क्लिन्नाक्षे पुंसि, इमान्येव—क्लिन्ने नेत्रे क्लीबे । (४) द्वे उन्मत्तस्य [ पागल ] त्रिपु । (५) त्रीणि कफरोगिण त्रिपु । (६) त्रीणि रोगेण भुग्नस्य त्रिपु । [कुबड़ा] (७) त्राणि उन्नतनाभे. त्रिपु ['तुण्डिया'] । (८) द्वे सिध्मरोगिणः त्रिपु । किलासी नान्त । (९) द्वे अन्धस्य त्रिपु । अदृक्—शान्त'। (१०) त्रीणि मूर्च्छितस्य । (११) षट् वीर्यस्य । तेजोरेतसी सान्ते क्लीबे । (१२) द्वे पित्तस्य । (१३) द्वे कफस्य । श्लेष्मा—नान्त. । (१४) द्वे चर्मणः । त्वक् स्त्रियां चान्ता । (१५) षट्—मांसस्य ।

[1]उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम् ।६३।
[2]रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम् ।
[3]बुक्काग्रमांसं [4]हृदयं हृन्मेदस्तु [5]वपा वसा ॥६४॥
[6]पश्चाद्ग्रीवा शिरा मन्या [7]नाडी तु धमनिः शिरा ।
[8]तिलकं क्लोम [9]मस्तिष्कं गोर्दं [10]किट्टं मलोऽस्त्रियाम् ६५
[11]अन्त्रं पुरीतद् [12]गुल्मस्तु प्लीहा पुंस्यथ वस्नसा ।
[13]स्नायुः स्त्रियां [14]कालखण्डयकृती तु समे इमे ६६

---

(१) त्रीणि शुष्कमांसस्य । (२) सप्त रक्तस्य। तत्र असृग् जान्त क्लीबे । (३) द्वे हृदयान्तर्गत मांस विशेषस्य। (४) द्वे हृदयस्य। हृत्-दान्तं क्लीबे। 'चत्वारः पर्याया' इत्येके। (५) त्रीणि वपाया, तत्र मेदः सान्तं क्लीबे [ चर्बी ] (६) ग्रीवापश्चाद्भागे स्थिताया सिराया एकम्। (७) त्रीणि नाड्या स्त्रियाम्। (८) द्वे उदरस्यजलाशयस्य। क्लोम—नान्तं क्लीबे (९) द्वे मस्तिस्कस्य। (१०) द्वे मलस्य, मलोऽस्त्रियाम्। (११) द्वे अन्त्रस्य [ आँतडी ] तत्र पुरीतत् अस्त्रियाम्। (१२) द्वे गुल्मस्य—[ तिल्ली ]। प्लीहा—नान्त पुंसि। (१३) द्वे अङ्गबन्धनरूपायाः, स्नायुः स्त्रियाम्। (१४) कुक्षि-दक्षभागमांसखण्डस्य [कलेजा] यकृत्—क्लीबे।

[1]दृषिका स्यन्दिनी लाला [2]दूषिका नेत्रयोर्मलम् ।
[[3]नासामलं तु सिङ्घाणं [4]पिञ्जूषः कर्णयोर्मलम् ।]
[5]मूत्रं प्रस्राव [6]उच्चारावस्करौ शमलं शकृत् ॥६७॥
पुरीषं गूथवर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ ।
[7]स्यात्कर्परःकपालोऽस्त्री [8]कीकसं कुल्यमस्थि च ६८
स्याच्छरीरास्थि [9]न कङ्कालः पृष्ठास्थि [10]न तु कशेरुका
[11]शिरोऽस्थानि करोटिःस्त्री पार्श्वास्थनि तु पर्शुका ६९
[12]अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ।
[13]गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥७०॥

(१) त्रीणि लालायाः, [ 'लाल' ] (२) एक नेत्रमलस्य [गींड] (३) द्वे नासामलस्य । (४) द्वे कर्णमलस्य (५) द्वे मूत्रस्य । ६() नव विष्ठायाः, शकृत् क्लीबे । वर्चस्कमस्त्री, विष्ठाविषौ स्त्रियां, तत्र विट पान्त । (७) द्वे कपालस्य । कपालोऽस्त्री । (८) त्रीणि अस्थिमात्रस्य । ['हड्डी'] । (९) एकं कङ्कालस्य ['अस्थिपञ्जर'] । (१०) एक पृष्ठास्थ्न । (११) द्वे मस्तकास्थ्न । (१२) चत्वारि देहावयवस्य । (१३) एकादश शरीरस्य । वपुः सान्त क्लीबे । वर्ष्म नान्तं क्लीबे । देहः पुनपुंसके । मूर्त्तितनूतनवः—स्त्रियाम् ।

काये देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।
[1]पादाग्रं प्रपदं [2]पादः पदंघ्रिश्चरणोऽस्त्रियाम् ॥७१॥
[3]तद्ग्रन्थी घुटिके गुल्फौ [4]पुमान्पार्ष्णिस्तयोरधः ।
जङ्घा तु [5]प्रसृता [6]जानुरुपर्वाष्ठीवदस्त्रियाम् ॥७२॥
[7]सक्थि क्लीबे पुमानूरुस्तत्सन्धिः पुंसि [8]वङ्क्षणः ।
[9]गुदं त्वपानं पायुर्ना [10]बस्तिर्नाभेरधो द्वयोः ॥७३॥
[11]कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।
[12]पश्चान्नितम्बः स्त्रीकट्याः [13]क्लीबे तु जघनं पुरः ॥७४॥

---

(१) द्वे पादाग्रभागस्य । (२) चत्वारि चरणस्य । (३) तस्य = पादस्य, ग्रन्थौ–घुटिके गुल्फौ । तत्र घुटिका स्त्रियाम् । पादग्रन्थ्योर्द्वे । ['टकणा'] (४) एकं पार्ष्णेः ['एडी'] पार्ष्णिः पुमान् । तयोः = गुल्फयोरधः । (५) द्वे जङ्घायाः ['पीण्डी'] (६) त्रीणि जानूरुसन्धेः । ['गोडा'] जानु क्लीबे । ऊरुपर्व नान्तं क्लीबे । अष्ठीवान् पुंसि क्लीबे च । (७) द्वे जानूपरिभागस्य ['जांघ' 'साथल']। सक्थि क्लीबे, ऊरुः पुंसि । (८) ऊरुसन्धेरेकम् पुंसि । ['वगली'] । (९) त्रीणि गुदस्य । (१०) नाभेरधोभागस्यैकं, पुंसि स्त्रियाञ्च । (११) कटिफलकस्य त्रीणि– स्त्रियाम् । (१२) स्त्रीकट्याः पश्चाद्भागस्यैकम् । (१३) एकं स्त्रीकट्याः पुरोभागस्य ।

[1]कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।
[2]स्त्रियां स्फिचौ कटिप्रोथा[3]वुपस्थो वक्ष्यमाणयोः ७५
[4]भगं योनिर्द्वयोः [5]शिश्नो मेढ्रो मेहनशेफसी ।
[6]मुष्कोऽण्डकोशो वृषणः [7]पृष्ठवंशाधरे त्रिकम् ।७६।
[8]पिचण्डकुक्षी जठरोदरं तुन्दं [9]स्तनौ कुचौ ।
[10]चूचुकन्तु कुचाग्रं स्यान्न ना [11]क्रोडं भुजान्तरम् ।७७।
[12]उरो वत्सं च वक्षश्च [13]पृष्ठन्तु चरमं तनोः ।
[14]स्कन्धो भुजाशिरोंऽसोऽस्त्री [15]संधी तस्यैव जत्रुणी

(१) पृष्ठवंशादधो गर्त्तयोरेकम्। क्लीबे। (२) द्वे कटिमांसपिण्डयोः। तत्र स्फिक् स्त्रियाम्। ['फांच'] (३) स्त्रीपुंसचिह्नविशेषयोर्भगशिश्नयोरेकम्। (४) द्वे स्त्रीयोनेः। योनिः स्त्रीपुंसयोः। (५) चत्वारि शिश्नस्य। तत्र शेफः सान्तं क्लीबे, अदन्तोऽपि पुंसि क्वचित्। (६) त्रीणि अण्डकोशस्य। (७) पृष्ठवंशाधोभागस्यैकम् ['तिग' 'कढ़नू']। (८) पञ्च जठरस्य। [पेट] कुक्षिः पुंसि। (९) द्वे स्तनस्य। (१०) द्वे स्तनाग्रभागस्य ['बिटकणा'] (११) द्वे अङ्कस्य। ['गोद']। क्रोडं न पुंसि। (१२) त्रीणि उरसः [ छाती ]। पधापि उरस इत्येके। (१३) पृष्ठस्यैकम्। (१४) त्रीणि स्कन्धस्य। अंसोऽस्त्रियाम्। ['कन्धा']। (१५) स्कन्धसन्ध्योरेकम्। जत्रु-क्लीबे। [ 'होठ' ]

[1]बाहुमूले उभौ कक्षौ पार्श्वम[2]स्त्री तयोरधः।
[3]मध्यमञ्चावलग्नञ्च मध्योऽस्त्री द्वौ परौ द्वयोः।७९।
[4]भुजबाहू प्रवेष्टो दोः [5]स्यात्कफोणिस्तु कूर्परः।
[6]अस्योपरि प्रगण्डः स्यात्[7]प्रकोष्ठस्तस्य चाप्यधः ८०
[8]मणिबन्धादाकनिष्ठं करस्य करभो बहिः।
[9]पञ्चशाखः शयः पाणि[10]स्तर्जनी स्यात्प्रदेशिनी ८१
[11]अङ्गुल्यः करशाखाः स्युः पुंस्य[12]ङ्गुष्ठः प्रदेशिनी।
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात्

(१) द्वे कक्षस्य [ बगल ]। (२) एक कक्षाधोभागस्य [ पाँसु ]। (३) त्रीणि देहमध्यस्य। मध्योऽस्त्री। (४) चत्वारि भुजस्य। द्वौ परौ—भुजबाहू—स्त्रीपुंसयोः। दोः षान्त स्त्रियाम्। दोः, दोषौ, दोषः। ['बाँह']। (५) द्वे कफोणेः। कफोणिर्द्वयोः। ['कूँहनी' 'कूँणी']। (६) कफोण्यूर्ध्वभागस्यैकम्।
(७) कफोणेरधो मणिबन्धपर्यन्तस्य भागस्य। (८) मणिबन्धात्कनिष्ठिकापर्यन्त करबहिर्भागस्य [ कलाई से कानी अँगुलीतक हाथ का किनारा']। (९) त्रीणि हस्तस्य [ हस्ततल = 'हथेली' ]। (१०) तर्जन्या द्वे। (११) द्वे अङ्गुले स्त्रियाम्। (१२) अङ्गुल्यङ्गुष्ठानां नामैकैकम्।

[1]पुंनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।
[2]प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥८३॥
[3]अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।
[4]पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥८४॥
[5]द्वौ संहतौ संहतलप्रतलौ वामदक्षिणौ ।
[6]पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥
[8]प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ।
[9]स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना॥८६॥

---

(१) चत्वारि नखस्य । नखनखरावस्त्रियाम् । (२) अङ्गुष्ठतर्जनीसमितः ततो हस्तः—प्रदेशः । अङ्गुष्ठमध्यमासमितो विस्तृतो हस्त तालः । अङ्गुष्ठानामिकोन्माने—गोकर्णः । (३) सकनिष्ठेऽङ्गुष्ठे द्वादशाङ्गुल —वितस्तिः [ 'बित्ता' ]। (४) विस्तृताङ्गुलौ पाणौ त्रय.—पुंसि । सिंहतलोपि ['थप्पड'] (५) विस्तृताङ्गुलिहस्तयुगलस्य मिलितस्य द्वे । [ 'दुहत्थड़' ] (६) एक प्रसृते ['पसर'] पुंसि । (७) एकमञ्जले. ['अंजुलि'] पुंसि । (८) विस्तृतकरे प्रकोष्ठे हस्त ['एकहाथ' = २४ अङ्गुल'] । (९) एकं बद्धमुष्टेर्हस्तस्य । तत्र मुष्टिर्द्वयो', रत्निः स्त्रियां पुंसि च । (१०) निष्कासितकनिष्ठिकेन मुष्टिनोपलक्षितो हस्तोऽरत्निः ।

[1]व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।
[2]ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥८७॥
[3]कण्ठो गलोऽथ [4]ग्रीवायां शिरोधिः कन्धरेत्यपि ।
[5]कम्बुग्रीवा त्रिरेखा साऽ[6]वटुर्घाटा कृकाटिका ॥८८॥
[7]वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।
[8]क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥
[9]ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।
[10]अधस्ताच्चिबुकं [11]गण्डौ कपोलौ [12]तत्परा हनुः ॥९०॥
[13]रदना दशना दन्ता रदास्[14]तालु तु काकुदम् ।

---

(१) प्रसारितभुजदण्डयुगलमध्यस्यैकम् । (२) एक पुरुषप्रमाणस्य ['पुरसा'] त्रिषु । (३) द्वे कण्ठस्य [ 'गला' ] । (४) त्रीणि ग्रीवायाः, तत्र शिरोधि — स्त्रियाम् । (५) शङ्खाकाराया ग्रीवाया एकम् । (६) त्रीणि ग्रीवामध्यस्योन्नतभागस्य ['घण्टी' घाटी'] । अवटु'—पुंसि । (७) सप्त मुखगह्वरस्य क्लीबे । (८) पञ्च नासिकायाः । [ नाक ] घ्राण—क्लीबे । (९) चत्वारि ओष्ठमात्रस्य । दशनवास सान्तं क्लीबे । (१०) एकं चिबुकस्य ['ठोडी'] । (११) द्वे कपोलस्य ['गाल'] (१२) कपोलाधोभागस्य ['जबाडा'] । (१३) चत्वारि दन्तस्य । (१४) द्वे तालुनः—नपुंसके ।

[1]रसज्ञा रसना जिह्वा [2]प्रान्तावोष्ठस्य सृक्कणी॥९१॥
[3]ललाटमलिकं गोधिर्[4]ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ।
[5]कूर्चमस्त्री भ्रुवोर्मध्यं [6]तारकाक्ष्णः कनीनिका॥९२
[7]लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टी [8]चास्रु नेत्राम्बु रोदनञ्चास्रमश्रु च॥९३॥
[9]अपाङ्गौ नेत्रयोरन्तौ [10]कटाक्षोऽपाङ्गदर्शने ।
[11]कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः॥९४
[12]उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्।

---

(१) त्रीणि जिह्वायाः। (२) एकमोष्ठपान्तस्य—नान्त क्लीबे। [ओठों का कोना' 'सिकनी'] सृक्कशब्द इत्यन्ये, ङ्यन्ता सृक्कणी स्त्रियामित्यपरे। अदन्तं सृक्कमित्यन्ये। इकारान्त क्लीबे सृक्किशब्द इत्येके। (३) त्रीणि ललाटस्य, तत्र गोधि. पुंसि। (४) एक नेत्ररोमपङ्क्ते., [भौंह] भ्रू स्त्रियाम्। (५) नासिकोपरि भ्रूद्वयमध्यभागस्य। कूर्चमस्त्री। (६) द्वे नेत्रकनीनिकाया.। ['आंख का कोया']

(७) अष्टौ नेत्रस्य। तत्र–चक्षु सान्तं नपुंसके। दृक् शान्ता स्त्रियाम्। (८) पञ्चास्रुण· [ आंसू ]। (९) नेत्रप्रान्तस्यैकम्। (१०) द्वे कटाक्षस्य। (११) षट् कर्णस्य। तत्र श्रुति –स्त्रियाम्। (१२) पञ्च शिरस., मूर्धा नान्त· पुंसि। मस्तकोऽस्त्रियाम्।

[1]चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः ॥९५
[2]तद्वृन्दे कैशिकं कैश्यम[3]लकाश्चूर्णकुन्तलाः ।
ते [4]ललाटे भ्रमरकाः [5]काकपक्षः शिखण्डकः ॥९६॥
[6]कबरी केशवेशोऽथ [7]धम्मिल्लः संयताः कचाः ।
[8]शिखा चूडा केशपाशी [9]व्रतिनस्तु जटा सटा ॥९७॥
वेणिः[10] प्रवेणी [11]शीर्षण्यशिरस्यौ विशदे कचे ।
[12]पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥९८॥
[13]तनूरुहं रोम लोम [14]तद्वृद्धौ श्मश्रु पुम्मुखे ।

---

(१) षट् केशस्य । (२) केशसमूहस्य द्वे । (३) कुटिलकेशानां द्वे । [ 'घुघुराले बाल' ] (४) ललाटगतकेशानामेकम् । [ 'काकुल' 'पट्टा' ] । (५) काकपक्षकस्य द्वे । [ 'कलम' ] । शिखाया इत्येके ।

(६) केशरचनाया द्वे । [ 'माग' ] (७) धम्मिलस्यैकम् । [ जूडा ] । (८) त्रीणि शिखाया, [ 'चोटी' ] । (९) जटाया द्वे । (१०) वेण्या द्वे [ 'गूथी हुई चोटी' ] । (११) निर्मलकेशे द्वे । (१२) केशपाशादिषु पाशादिशब्दाः समूहार्थाः । (१३) त्रीणि रोम्ण. । [ रोआं ] रोमलोमनी नान्ते नपुसके । (१४) त्रीणि मुखकेशस्य [ 'दाढीमोछ' ] ।

[1]आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥९९॥
दशैते त्रिष्व[2]लंकृतोऽलङ्करिष्णुश्च [3]मण्डितः ।
प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥१००॥
[4]विभ्राड् भ्राजिष्णुरोचिष्णू [5]भूषा तु स्यादलंक्रिया ।
[6]अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥१०१॥
मण्डनं चाथ [7]मुकुटं किरीटं पुन्नपुंसकम् ।
[8]चूडामणिः शिरोरत्नं [9]तरलो हारमध्यगः ॥१०२॥
[10]बालपाश्या पारितथ्या [11]पत्त्रपाश्या ललाटिका ।

---

(१) पञ्च प्रसाधनस्य । [ 'वेष' 'सजना' 'शिगरना' ] । प्रतिकर्म नान्तम् । वक्ष्यमाणा रोचिष्णुपर्यन्ता दश त्रिषु । (२) अलङ्करणशीलस्य द्वे,—त्रिषु । (३) भूषितस्य पञ्च—त्रिषु । (४) अलङ्कारादिना शोभमानस्य त्रीणि त्रिषु । [ एते दश त्रिषु = विशेष्यनिघ्ना बोध्या. ] (५) द्वे भूषणक्रियायाः । (६) पञ्चालङ्कारस्य । [ 'गहना' ] । (७) द्वे किरीटस्य—पुंनपुंसकयोः । (८) द्वे चूडामणेः [ 'बोरला' ] शिरोमुकुटमणेर्वा । (९) हारमध्यगतो मणिस्तरलः । (१०) द्वे सीमन्तालङ्कारस्य स्वर्णपट्टिकाख्यस्य । प्रथम बालबन्धनमुक्तावल्या इति केचित् । (११) द्वे ललाटालङ्कारस्य । ['पात' 'फीणी' आदि]

[1]कर्णिका तालपत्रं स्यात्[2]कुण्डलं कर्णवेष्टनम्॥१०३

[3]ग्रैवेयकं कण्ठभूषा [4]लम्बनं स्याल्ललन्तिका।

[5]स्वर्णैः प्रालम्बिका[6]ऽथोरःसूत्रिका मौक्तिकैः कृता॥

[7]हारो मुक्तावली [8]देवच्छन्दोऽसौ शतयष्टिकः।

[9]हारभेदा यष्टिभेदाद्गुत्सगुत्सार्धगोस्तनाः॥१०५

[10]अर्धहारो माणवक एकावल्येकयष्टिका।

सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः॥१०६

---

(१) द्वे कर्णभूषणस्य। (२) द्वे कुण्डलस्य। (३) द्वे कण्ठभूषणस्य [ 'गोप'—'कण्ठा' ] कण्ठभूषा-स्त्रियाम्। (४) द्वे लम्बमानस्य मुक्तादि-कण्ठभूषणविशेषस्य [ कण्ठी ]। (५) स्वर्णनिर्मितकण्ठिकायाः, [ 'सोने की कण्ठी' ] (६) मौक्तिकमालाया एकम्। (७) मुक्ताहारस्य द्वे। (८) द्वे शतयष्टिकहारस्य [ 'सोलहा हार' ]। (९) यष्टिभेदात्—हारभेदाः, तथा हि—"द्वात्रिंशल्लतिको-(३२)-गुच्छो गुच्छार्धस्तत्त्व-(२४)-सल्यकः। चतुस्त्रिंशल्लतो-(३४)-हारश्चतुर्दष्टिश्च गोस्तनः। एकावली त्वेकयष्टिः।" सप्तविंशतिमौक्तिकैर्नक्षत्रमाला।

आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।
केयूरमङ्गदं तुल्ये अं[3]गुलीयकमूर्मिका ॥१०७॥
साक्षराङ्गुलिमुद्रा स्यात्कङ्कणं करभूषणम् ।
स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा १०८
क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु ।
पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥१०९
हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका ।
[11]त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दशे[12] त्रिषु ॥११०॥

(१) चत्वारि प्रकोष्ठाभरणस्य [ 'चूड़ी' 'बन्द' ] (२) प्रगण्डभूषणस्य द्वे [ 'बाजू बन्द' ]। (३) अङ्गुलीयकस्य द्वे । [ 'अंगूठी' ]। (४) एक साक्षराङ्गुलीमुद्रायाः । (५) मणिबन्धभूषणस्य कङ्कणस्य द्वे [ 'कङ्गन' ]। (६) स्त्रीपुंसादिकटिभूषणस्य। [ 'तागड़ी' ]। एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका। रसना स्यात् षोडशभिः कलापः पञ्चविंशकः । (७) पुरुषकटीस्थकाञ्च्यास्त्रिषु । (८) चत्वारि नूपुरस्य। नूपुरोऽस्त्रियाम् । ['पैंजनी'] (९) द्वे नूपुरस्य, षडपि पर्याया इत्येके (१०) द्वे क्षुद्रघण्टिकायाः। [ घुंघुरु ]। (११) त्वक्फलादितन्तुभिर्वस्त्रं निर्मीयते। (१२) दर्श=वाल्क–क्षौम–फाल–कार्पास–बादर–कौशेय–राङ्कवानाहत–निष्प्रवाणि-तन्त्रकाणि, त्रिषु = विशेष्यनिघ्नानि ।

[1] वाल्कं क्षौमादि [2] फालं तु कार्पासं बादरं च तत् ।
[3] कौशेयं कृमिकोशोत्थं [4] राङ्कवं मृगरोमजम् ॥ १११ ॥
[5] अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ।
[6] तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥
[7] पत्त्रोर्णं धौतकौशेयं [8] बहुमूल्यं महाधनम् ।
[9] क्षौमं दुकूलं स्याद्द्वे तु [10] निवीतं प्रावृतं त्रिषु ॥ ११३
[11] स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयोर्द्वयोः ।
[12] दैर्घ्यमायाम आनाहः [13] परिणाहो विशालता ॥ ११४

(१) क्षौमादि-वाल्कं, त्रिपु [ 'शणिया' 'अरण्डो' ] । (२) त्रीणि कार्पासवस्त्रस्य—त्रिपु । [ 'सूती वस्त्र' ] (३) एक पीताम्बरादेः त्रिपु । [ 'रेशमी वस्त्र' ] । (४) ऊर्णादिनिर्मितकम्बलादेरेकम् । (५) अनाहतवस्त्रस्य चत्वारि—त्रिपु । [ 'कोरा कपड़ा' ] । (६) धौतवस्त्रद्वयस्य—[ 'धोती-दुपट्टा' ] । (७) धौतकौशेयस्यैकं द्वे वा । (८) द्वे महामूल्यवस्त्रादेः । (९) पट्टवस्त्रस्य द्वे । परे तु—बहुमूल्यमित्यादीनि चत्वारि पर्यायाणीत्याहुः ।

(१०) प्रावृतवस्त्रस्य द्वे—त्रिपु । [ओढ़ा हुआ दुशाला आदि] (११) वस्त्रान्तावयवानां द्वे, स्त्रिया नित्य बहुवचनान्तो दशाशब्द । वस्ति स्त्रीपुंसयो । [ 'फल्ना' ] (१२) त्रीणि वस्त्रादेर्दैर्घ्यस्य [ 'लम्बाई' ] (१३) द्वे विस्तारस्य

[1]पटच्चरं जीर्णवस्त्रं समौ [2]नक्तककर्पटौ ।
[3]वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ॥११५॥
[4]सुचेलकः पटोऽस्त्री ना [5]वराशिः स्थूलशाटकः ।
[6]निचोलः प्रच्छदपटः [7]समौ रल्लककम्बलौ ॥११६॥
[8]अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ।
[9]द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ११७
संव्यानमुत्तरीयं च [10]चोलः कूर्पासकोऽस्त्रियाम् ।
[11]नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ११८

[ 'पनहा' ]। (१) जीर्णवस्त्रस्य द्वे । (२) द्वे प्रस्वेदादिमार्जनार्थं धृतस्य वस्त्रखण्डस्य । [ 'रूमाली' ]। केचित्तु इदं नामद्वय—'नतना' 'छन्ना' इति प्रसिद्धस्येत्याहुः । (३) षट् वस्त्रस्य । वासः सान्त क्लीबे । (४) द्वे शोभनवस्त्रस्य । (५) द्वे स्थूलवस्त्रस्य पुंसि । (६) द्वे शिविकादिपिधानस्य 'पर्दा' इत्याख्यस्य। 'बुरका' इति प्रसिद्धस्येत्यन्ये। 'पलङ्गपोस' 'खोली' इति प्रसिद्धस्येत्येके। (७) द्वे कम्बलस्य। (८) चत्वारि अधोवस्त्रस्य [ 'धोती' 'शाडी' ]। (९) पञ्च उपरिवस्त्रस्य [ 'ओढणा' 'दुपट्टा' ]। (१०) द्वे आप्रपदीनस्य चोलस्य [ 'चोगा' ]। स्त्रीकञ्चुकस्य इत्यन्ये। [ 'आंगी' ] (११) एकं हिमानिलनिवारणप्रावरणस्य [ 'रिजाई' 'सोड' ]

[1]अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् ।
[2]स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ११९
[3]अस्त्री वितानमुल्लोचो [4]दूष्याद्यं वस्त्रवेश्मनि ।
[5]प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा १२०
[6]परिकर्माङ्गसंस्कारः [7]स्यान्मार्ष्टिर्मार्जना मृजा ।
[8]उद्वर्तनोत्सादने द्वे समे [9]आप्लाव आप्लवः १२१
स्नानं [10]चर्चा तु चार्चिक्यं स्थासकोऽथ [11]प्रबोधनम् ।
अनुबोधः [12]पत्त्रलेखा पत्त्राङ्गुलिरिमे समे ॥१२२
[13]तमालपत्त्रतिलकचित्रकाणि विशेषकम् ।

---

(१) त्रीणि 'लहगा' इति प्रसिद्धस्य । [ 'घाघरा' ] । (२) एकं पादाग्रपर्यन्तलम्बमानवस्त्रादेः । (३) द्वे वितानस्य [ 'चन्दवा' ] अस्त्री वितानम् । (४) दूष्य–पटकुटी–पटवासादि–वस्त्रगृहे । (५) त्रीणि जवनिकाया. [ 'कनात' ] (६) द्वे शरीरशोभाधायकसंस्कारादेः । (७) त्रीणि मार्जनस्य । (८) उद्वर्तनेनाङ्गसंस्कारस्य द्वे [ 'उबटना लगाना' ] । (९) त्रीणि स्नानस्य । (१०) चन्दनादिलेपनस्य त्रीणि । (११) गतगन्धादेर्वस्तुन पुनर्गन्धानयनस्य द्वे । (१२) द्वे स्तनकपोलादौ कस्तूर्यादिना रचितस्य तिलकविशेषस्य । (१३) चत्वारि ललाटतिलकविशेषस्य ।

द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम्[२] ॥१२३॥
काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने ।
रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ॥१२४॥
लाक्षा[३] राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।
लवङ्गं[४] देवकुसुमं श्रीसंज्ञमथ जायकम्[५] ॥१२५॥
कालीयकञ्च कालानुसार्यं चाथ समार्थकम्[६] ।
वंशिकागुरुराजार्हलोहं कृमिजजोङ्गकम् ॥१२६॥
कालागुर्वगुरु[७] स्यात्तन्मङ्गल्या मल्लिगन्धि यत्[८] ।
यक्षधूपः[९] सर्जरसो रालसर्वरसावपि ॥१२७॥
बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपकौ[१०] ।

---

( १ ) तत्र चतुर्णांमध्य तिलक—विशेषकौ पुनपुंसकयो । ( २ ) एकादश केसरस्य । ( ३ ) पट् यावकस्य, [ 'महावर' 'लाख' ] जतु—क्लीबे (४) त्रीणि लवङ्गस्य [ लौंग ]

(५) सुगन्धद्रव्यभेदस्य । [जायक] । ( ६ ) पट्—अगुरुण [ 'अगर' ] वशकोपि । (७) द्वे कालागुरुण । (८) द्वे-रोचनाया । एकमित्येके (९) पञ्चरालस्य । (१०) द्वे सुगन्धिनिर्मितधूपस्य ।

[1]तुरुष्कः पिण्डकः सिह्लो यावनोऽप्यथ पायसः ॥
[2]श्रीवासो वृकधूपोऽपि श्रीवेष्टसरलद्रवौ ।
[3]मृगनाभिर्मृगमदः कस्तूरी चाथ को[4]लकम् १२९
कक्कोलकं कोशफलमथ क[5]र्पूरमास्त्रियाम् ।
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका १३०
[6]गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।
तै[7]लपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥१३१॥
ति[8]लपर्णी तु पत्त्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं चाथ [9]जातीकोशजातीफले समे १३२
[10]कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।

---

(१) चत्वारि यावनस्य [ 'लोहवान' ] (२) पञ्च सरलद्रवस्य- [ 'गन्धावेरजा' ] (३) त्रीणि कस्तूर्याः । (४) त्रीणि कक्कोलस्य । (५) पञ्च कर्पूरस्य । कर्पूरमस्त्रियाम् । (६) चत्वारि चन्दनस्य । चन्दनोऽस्त्रियाम् । (७) चन्दनविशेषाणामेकैकम् । (८) पञ्च रक्तचन्दनस्य । (९) द्वे जातीफलस्य [ जायफल ] (१०) एक लेपविशेषस्य । तदुक्तं—

"कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनन्तथा ।
महासुगन्धमित्युक्तं नामतो यक्षकर्दमः ॥"

गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥१३३॥
चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ।
संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ।
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् १३५
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षकं तु तत् ।
यत्तिर्यक् क्षिप्तमुरसि शिखास्वापीडशेखरौ १३६
रचना स्यात्परिस्पन्द आभोगः परिपूर्णता ।
उपधानन्तूपबर्हः शय्यायां शयनीयवत् ॥१३७॥

(१) चत्वारि गात्रानुलेपयोग्यसुगन्धिद्रव्यस्य । केचित्तु—आद्यद्वय गात्रानुलेपनवर्त्तेः.—वर्णकादिद्वयं चन्दनादिलेपस्येत्याहुः । (२) सुगन्धचूर्णस्य द्वे । (३) वासितस्य द्वे । (४) गन्धपुष्पादिभिर्वासितस्यैकम् । (५) त्रीणि मस्तकधृतमालायाः । (६) केशमध्ये धृतपुष्पादेरेकम् । (७) एकं शिखाया लम्बमानस्य पुष्पादेः । (८) एकं ललाटस्थापितपुष्पादेः । (९) कण्ठे ऋजु लम्बमानस्य पुष्पादेः । (१०) एकं—यज्ञोपवीतवत्तिर्यक् स्थापितस्य मालादेः । (११) शिखास्थितमाल्यस्य द्वे । (१२) द्वे पुष्पादिसन्निवेशविशेषस्य । (१३) परिपूर्णताया द्वे । (१४) शिरोनिधानस्य द्वे ['तकिया']। (१५) त्रीणि शय्यायाः ['गद्दी—तोशिया']

[1]शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।
[2]गेन्दुकः कन्दुको [3]दीपःप्रदीपः [4]पीठमासनम् १३८
[5]संमुद्गकः सम्पुटकः [6]प्रतिग्राहः पतद्ग्रहः ।
[7]प्रसाधनी कङ्कतिका [8]पिष्टातः पटवासकः १३९
[9]दर्पणे मुकुरादर्शौ [10]व्यजनं तालवृन्तकम् ।

❀ इति मनुष्यवर्गः ६ ❀

---

केचित्—शय्यामात्रस्येत्याहुः ।

(१) चत्वारि पर्यङ्कस्य [ 'पलङ्ग' ]। (२) कन्दुकस्य द्वे। कन्दुकवदुपधास्येत्येके [ 'गालमसूरिया'–'छोटा तकिया' ]। (३) द्वे दीपस्य। (४) द्वे आसनस्य। [ 'पट्टा'–'कुर्सी'–'आसन' ]। (५) द्वे संपुटस्य [ 'डिब्बा'–'पिटारी' ]। (६) द्वे पतद्ग्रहस्य ['पीकदान']। (७) द्वे 'कघी' इति ख्यातायाः। (८) द्वे पिष्टातस्य [ 'अबीर बुक्का'—'गुलाल' ]। (९) त्रीणि दर्पणस्य। (१०) द्वे व्यजनस्य [ 'बीजणा'–'पखा' ]।



## ❀ अथ ब्रह्मवर्गः ❀

[1]सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः सन्तानो [2]वर्णाः स्युर्ब्राह्मणादयः॥
[3]विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
[4]राजबीजी राजवंश्यो [5]बीज्यस्तु कुलसम्भवः २
[6]महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
[7]ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥३॥
आश्रमोऽस्त्री [8]द्विजात्यग्रजन्मभूदेववाडवाः ।
विप्रश्च ब्राह्मणोऽसौ [9]षट्कर्मा यागादिभिर्युतः ४

---

❀ अभिनवराजलक्ष्मीः ❀

(१) नव वंशस्य [खान्दान] । सन्ततिः—स्त्रियाम् । (२) ब्राह्मणादसामान्यस्यैकम् । (३) वर्णचतुष्टयस्यैकम् । (४) राजवंशोत्पन्नस्य द्वे । राजबीजी नान्त । (५) कुलोत्पन्नस्य द्वे । (६) षट्—कुलीनस्य । (७) ब्रह्मचर्यादीनामेकम् । (८) षट्—ब्राह्मणस्य । (९) एकं षट्कर्मशीलस्य ब्राह्मणस्य । तदुक्तं—

"इज्याध्ययनदानानि याजनाध्यापने तथा ।
प्रतिग्रहश्च तैर्युक्तः 'षट्कर्मा' विप्र उच्यते ॥"

विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः।
दूरदर्शी दीर्घदर्शी [2]श्रोत्रियच्छान्दसौ समौ ॥६॥
[मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि।
वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि ॥
नैयायिकस्त्वक्षपादः स्यात्स्याद्वादिक आर्हतः।
चार्वाकलौकायतिका सत्कार्ये सांख्यकापिलौ ]
[3]उपाध्यायोऽध्यापकोऽथ [4]स निषेकादिकृद् गुरुः।
[5]मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ७

(१) द्वाविंशति• पण्डितस्य, विद्वान् सान्त•, विपश्चित्तान्तः। सन्—तान्तः। संख्यावान् धीमांश्च तान्त•, कृति—मनीषि—दूरदर्शि—दीर्घदर्शिनो नान्ताः।
(२) वेदाध्यायिनो द्वे। (३) द्वे उपाध्यायस्य। तदुक्त—

"एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्याय• स उच्यते ॥"

(४) एक—( सस्कारादिकर्त्ता : ) गुरो•। (५) आचार्यस्य द्वे। तदुक्त—

[1]यष्टा च यजमानश्च [2]स सोमवति दीक्षितः ।
[3]इज्याशीलो यायजूको [4]यज्वा तु विधिनेष्टवान् ८
[5]स गीर्पतीष्ट्या स्थपतिः सो[6]मपीती तु सोमपः ।
[7]सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥९॥
[8]अनूचानः प्रवचने सांगेऽधीती गुरोस्तु यः ।
[9]लब्धानुज्ञः समावृत्तः [10]सुत्वा त्वभिषवे कृते ॥१०॥
[11]छात्रान्तेवासिनौ शिष्ये [12]शैक्षाः प्राथमकल्पिकाः ।
[13]एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥११॥

---

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
साङ्गं वा सरहस्यं वा तमाचार्यं प्रचक्षते ॥"

(१) त्रीणि यजमानस्य [ यज्ञकर्त्तु ] । (२) एकं सोमयाजिनः । (३) यागशीलस्य द्वे । (४) विधिना यज्ञं कृतवत एकम् । ( ५ ) 'बृहस्पतिसवन' नामकयज्ञकर्त्तुरेकम् । (६) द्वे सोमयाजिनः । (७) विश्वजिन्नामकयज्ञकर्त्तुरेकम् । (८) साङ्गवेदाध्येतुरेकम् । (९) समावृत्तस्यैकम् । (१०) कृताभिषवस्नानस्यैकम् । सुत्वा नान्तः पुंसि । (११) त्रीणि शिष्यस्य । (१२) शिक्षाध्यायिनां प्रथमारब्धवेदानां द्वे । (१३) एकं समानशाखाध्येतॄणाम् ।

[1]सतीर्थ्यास्त्वेकगुरव[2]श्चितवानग्निमग्निचित्।
[3]पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम्॥१२॥
[4]उपज्ञा ज्ञानमाद्यं [5]स्याज्ज्ञात्वारम्भ उपक्रमः।
[6]यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः॥१३॥
[7]पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः।
एते पञ्चमहायज्ञा ब्रह्मयज्ञादिनामकाः॥१४॥
[8]समज्या परिषद् गोष्ठी सभासमितिसंसदः।
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः १५
[9]प्राग्वंशः प्राग्घविर्गेहात्[10]सदस्या विधिदर्शिनः।

(१) द्वे सहाध्यायिनाम्। (२) एकमग्निचित [illegible]। (३) परम्परागतोपदेशस्य द्वे। (४) आद्यज्ञानस्यैकम्। (५) प्रथमारम्भस्यैकम्। (६) सप्त यज्ञस्य। (७) महायज्ञादि—नामैकैकम्। तदुक्तम्—

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥"

(८) नव सभायाः। परिषत्—[illegible] स्त्रियां, सदः [illegible]—[illegible]।

(९) हविर्गेहात्पूर्वं भागे यजमानादीनां [illegible] गृहे—प्राग्वंशः [illegible]।
(१०) द्वे सदस्यस्य।

[1]सभासदः सभास्ताराः सभ्याःसामाजिकाश्च ते१६
[2]अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।
[3]आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते १७
[4]वेदिः परिष्कृता भूमिः समे [5]स्थण्डिलचत्वरे ।
[6]चषालो यूपकटकः [7]कुम्बा सुगहना वृतिः ॥१८॥
[8]यूपाग्रं तर्म [9]निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।
[10]दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥१९॥
[11]अग्नित्रयमिदं त्रेता [12]प्रणीतः संस्कृतोऽनलः ।
[13]समूह्यःपरिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥२०॥

(१) चत्वारि सभ्यानाम् । (२) यजुर्विद्—अध्वर्युः, सामविदुद्गाता, ऋग्वित् होता । (३) द्वे ऋत्विजां ब्रह्मोद्गात्रादीनाम् ।

(४) एकं यज्ञवेद्याः । (५) यागार्थे संस्कृतभूभेदे—क्लीबे । (६) यूपकटकस्य द्वे । (७) एकं सुगहनाया वृतेः ['बाड'] । (८) यूपाग्रभागस्य द्वे । तर्म नान्त क्लीबे । (९) एकम्—अरणेः । अरणिर्द्वयो । (१०) एकैकमग्निविशेषस्य । (११) एकमग्नित्रयस्य । (१२) एकं संस्कृतस्याग्नेः । (१३) त्रीण्यग्निनामानि । ( अग्नौ प्रयोगिणः = अग्निनामानि । )

[1]यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।
तस्मिन्नानाय्यो[2]ऽथाग्नायी स्वाहा च हुतभुक्प्रिया
[3]ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।
[4]गायत्रीप्रमुखं छन्दो [5]हव्यपाके चरुः पुमान् २२
[6]आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
[7]धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥२३॥
[8]पृषदाज्यं सदध्याज्ये [9]परमान्नं तु पायसम् ।
[10]हव्यकव्ये दैवपैत्रे [11]अन्ने पात्रं स्रुवादिकम् ॥२४॥
[12]ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।

---

(१) गार्हपत्यादानीय सस्कृतस्य दक्षिणाग्नेरेकम् । (२) अग्निपत्न्या स्त्रीणि । ( ३ ) समित्प्रक्षेपेण—अग्निमन्धुक्षणे प्रयुक्ताया ऋचो नामनी द्वे । (४) एक छन्दस । (५) एक चरो । ( ६ ) क्वथिते उष्णे पयसि दधिनिक्षेपे सति यन्निष्पद्यते द्रव्य सा—आमिक्षा । (७) मृगचर्मरचितव्यजनस्यैकम् । (८) दधिमिश्रितघृतस्यैकम् । (९) द्वे क्षीरान्नस्य ['खीर']। (१०) दैवेऽन्ने हव्य पैत्रेऽन्ने कव्यम् । (११) यज्ञपात्रादीनामेकैकम् । आदिना चमसोलूखल-स्फ्यादयो ग्राह्या । (१२) ध्रुवा–उपभृत्–जुहू –एते स्रुग्विशेषाः, स्त्रियाम्'

[1]उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः २५
[2]परम्पराकं शमनं प्रोक्षणं च वधार्थकम् ।
[3]वाच्यलिंगाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥२६॥
[4]सान्नाय्यं हविरग्नौ तु[5] हुतं त्रिषु वषट्कृतम् ।
[6]दीक्षान्तोऽवभृथो यज्ञस्तत्कर्मा[7]र्हन्तु[8] यज्ञियम् २७
त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि[9] ।
[10]अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥२८॥
[11]त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥

स्रुवस्तु स्रुग्विशेष. पुंसि । (१) अभिमन्त्र्य यज्ञे हतस्य पशोरेकम् । (२) यज्ञार्थे पशुमारणस्य । (३) यज्ञहतपशोस्त्रीणि–त्रिषु । (४) द्वे हविष । (५) अग्नौ हुतस्य । (६) एकमवभृथस्नानस्य । (७) यज्ञार्हवस्तूनां विप्रादीनामेकं त्रिषु । (८) क्रतो = यज्ञस्य, कर्मण. = दानादेश्च–इष्टमिति नामेत्यर्थः । (९) देवालयारामतडागादेर्निर्माणस्यैकम् । (१०) यज्ञशेष — पुरोडाशादि.–अमृतम् । गुर्वतिथिपित्रादिभुक्तशेष = अन्नादिश्च–विघस. । (११) दानस्य त्रयोदश ।

प्रादेशनं निर्वपनमपवर्जनमंहतिः ।
[1]मृतार्थे तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम् ॥३०॥
[2]पितृदानं निवापः [3]स्याच्छ्राद्धं तत्कर्म शास्त्रतः ।
[4]अन्वाहार्यं मासिकें[5]ऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम्
[6]पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ।
[7]सनिस्त्वध्येषणा [8]याच्ञाभिशस्तिर्याचनाऽर्थना ३२
[9]षट् तु त्रिष्वर्घ्यम[10]र्घार्थे पाद्यं पादाय वारिणि ।
[11]क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ३३
[12]स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।

---

(१) मृताहे दानम्—औध्र्वदेहिक, त्रिपु।(२) द्वे सपिण्डनादूर्ध्वं पित्रुद्देशेन दानस्य। (३) शास्त्रोक्तविधिना पितृकर्म श्राद्धम्। (४) द्वे पितृणा मासिकस्य कृत्यस्य। (५) अह्नोऽष्टमस्य भागस्यैकम्। (६) चत्वारि—धर्माद्यन्वेषणस्य। (७) गुर्वादेराराधनस्य द्वे। प्रार्थनापूर्वक गुर्वादे. क्वचित्कर्मणि नियोजनस्येत्येके। (८) चत्वारि याचनस्य [ मागना ]। (९) आगन्तुशब्दपर्यन्ता. पट् त्रिपु = त्रिशेष्यनिघ्नाः। (१०) अर्घ्यपाद्ययोरेकैकम्। (११) अतिथ्यर्थम्—आतिथ्यम्। अतिथौ साधु—आतिथेयम्। ( १२ ) त्रीणि अतिथेः। [ 'पाहुन' 'बटाऊ' ]।

[प्राघूर्णिकः प्राघुणकश्चाभ्युत्थानं तु गौरवम् ३४]
[1]पूजा नमस्याऽपचितिः सपर्याचार्हणाः समाः ।
[2]वरिवस्या तु शुश्रूषा परिचर्याप्युपासना ॥३५॥
[3]व्रज्याऽटाट्या पर्यटनं [4]चर्या त्वीर्यापथे स्थितिः ।
[5]उपस्पर्शस्त्वाचमनमथ [6]मौनमभाषणम् ॥३६॥
[ प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ।
वाल्मीकिश्चाथ गाधेयो विश्वामित्रश्च कौशिकः।
व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः॥]
[7]आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः ।
पर्यायश्चा[8]तिपातस्तु स्यात्पर्याय उपात्ययः ॥३७॥
[9]नियमो व्रतमस्त्री तच्चो[10]पवासादि पुण्यकम् ।

---

(१) षट् पूजनस्य । (२) चत्वारि सेवायाः । (३) त्रीणि पर्यटनस्य [ 'घूमना' ] (४) ईर्यापथे = ध्यानादिरूपे उपाये स्थितिः—चर्या । एक संन्यासिनां ध्यानादेः । (५) द्वे आचमनस्य । (६) द्वे मौनस्य । (७) पञ्च क्रमस्य । वावृत्-स्त्रियाम् । (८) क्रमोल्लङ्घनस्य त्रीणि । (९) द्वे व्रतमात्रस्य । (१०) तच्च उपवासकृच्छ्रचान्द्रायणादिव्रतम्—पुण्यकमित्युच्यते । एकमुपवासादेः ।

[1]औपवस्तं तूपवासो [2]विवेकः पृथगात्मता ॥३८॥
[3]स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धि[4]रथाञ्जलिः ।
पाठे ब्रह्माञ्जलिः [5]पाठे विप्रुषो ब्रह्मबिन्दवः ॥३९॥
[6]ध्यानयोगासने ब्रह्मासनं [7]कल्पे विधिक्रमौ ।
[8]मुख्यः स्यात्प्रथमः कल्पो[9]ऽनुकल्पस्तु ततोऽधमः
[10]संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ।
[11]समे तु पादग्रहणमभिवादनमित्युभे ॥४१॥
[12]भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ।
[13]तपस्वी तापसः पारिकाङ्क्षी [14]वाचंयमो मुनिः ४२

(१) द्वे उपवासस्य (२) द्वे—विवेकस्य = प्रकृतिपुरुषादिभेदबुद्धेः । (३) आचारवेदाध्ययनतपःसम्पत्तिः—'ब्रह्मवर्चस'मित्युच्यते । (४) वेदाध्ययनावसरे कृतस्याञ्जलेरेकम् । (५) वेदपठनावसरे मुखान्निर्गतबिन्दूनामेकम् । (६) एकं ब्रह्मासनस्य । (७) त्रीणि विधानस्य । (८) मुख्यकल्पस्यैकम् । (९) गौणविधेरेकम् । (१०) विशिष्टसंस्कारपूर्वकं श्रुतेर्ग्रहणम्—उपाकर्म । (११) द्वे यथावन्नामोच्चारणपूर्वकं नमस्कारस्य । (१२) पञ्च सन्यासिनाम् । (१३) त्रीणि तपस्विनः । (१४) द्वे मौनव्रतशालिनः ।

[1]तपःक्लेशसहो दान्तो [2]वर्णिनो ब्रह्मचारिणः ।
[3]ऋषयः सत्यवचसः [4]स्नातकस्त्वाप्लुतो व्रती ४३
ये [5]निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ।
[6]यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ
स्थाण्डिलश्चाथ [7]विरजस्तमसः स्युर्द्वयातिगाः ।
[8]पवित्रः प्रयतः पूतः [9]पाखण्डाः सर्वलिङ्गिनः ४५
[10]पालाशो दण्ड आषाढो [11]व्रते राम्भस्तु वैणवः ।
[12]अस्त्री कमण्डलुः कुण्डी [13]व्रतिनामासनं वृषी ॥
[14]अजिनं चर्म कृत्तिः स्त्री [15]भैक्षं भिक्षाकदम्बकम्

---

(१) द्वे तपःक्लेशसहनशीलस्य । (२) द्वे ब्रह्मचारिणः । (३) द्वे ऋषिसामान्यस्य । (४) समाप्तवेदव्रतस्यापि आश्रमान्तरमगतस्य । (५) निर्जितसर्वेन्द्रियाणां त्रीणि । (६) अनास्तृत भूमिशयन व्रत शालिनो द्वे । (७) निवृत्तरजस्तमोगुणानां द्वे । ( ८ ) त्रीणि पवित्रस्य । ( ९ ) वेदबाह्यपथवर्तिनां द्वे । ( १० ) एकं पालाशदण्डस्य । ( ११ ) एकं वैणवदण्डस्य । ( १२ ) द्वे यत्यादीनां जलपात्रस्य । ( १३ ) व्रतिनामासनस्यैकम् । ( १४ ) त्रीणि मृगादिचर्मणः । (१५) भिक्षासमूहस्यैकम् ।

[1]स्वाध्यायः स्याज्जपः [2]सुत्याऽभिषवः सवनं च सा
[3]सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ।
[4]दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ४८
[5]शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ।
[6]नियमस्तु स यत्कर्म नित्यमागन्तु साधनम् ४९
[ क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु । ]
[7]उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥
[8]प्राचीनावीतमन्यस्मिन्निवीतं [9]कण्ठलम्बितम् ५०
[10]अङ्गुल्यग्रे तीर्थं दैवं [11]स्वल्पाङ्गुल्योर्मूले कायम् ।
[12]मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं [13]मूले त्वङ्गुष्ठस्य ब्राह्मम्

(१) द्वे वेदाध्ययनस्य । (२) सोमलताकण्डनस्य त्रीणि । (३) एकमघमर्षणस्य । (४) दर्शपौर्णमासयोरेकैकम् । (५) यावज्जीव करणीयस्य नित्यकर्मण एकम् । (६) अनित्यागन्तुककर्मण एकम् । (७) द्वे यज्ञोपवीतस्य वामस्कन्धार्पितस्यैकम् । ( ८ ) दक्षिणस्कन्धार्पितयज्ञोपवीतस्यैकम् । ( ९ ) कण्ठलम्बियज्ञोपवीतस्यैकम् । ( १० ) एकं दैवतीर्थस्य । ( ११ ) एकं कायतीर्थस्य । ( १२ ) एक पितृतीर्थस्य । ( १३ ) एक ब्राह्मतीर्थस्य ।

[1]स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं तद्वत्[2]कृच्छ्रं सान्तपनादिकम् ॥५२॥
सं[3]न्यासवत्यनशने पुमान् प्रायोऽथ वीरहा ।
नष्टाग्निः कु[4]हना लोभान्मिथ्येर्यापथकल्पना ॥५३॥
[5]व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः ।
[6]धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ॥५४॥
[7]सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्[8]मुक्ताभ्युदितौ च यथाक्रमम् ॥५५॥
[9]परिवेत्ताऽनुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ।

(१) [illegible] । (२) [illegible] । (३) [illegible] । (४) [illegible] । (५) [illegible] । (६) [illegible] । (७) [illegible] । (८) [illegible] । (९) [illegible] । (१०) [illegible] । (११) [illegible] ।

[1]परिवित्तिस्तु तज्ज्यायान् [2]विवाहोपयमौ समौ ५६
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ।
[3]व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ॥५७॥
[4]त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः[5] समोक्षकैः ।
[6]सबलैस्तैश्चतुर्भद्रं [7]जन्याः स्निग्धा वरस्य ये ५८

❀ इति ब्रह्मवर्गः ॥ ७ ॥ ❀

अथ क्षत्रियवर्गः ॥ ८ ॥

[8]मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्
[9]राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥१॥
[10]राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।

---

(१) परिवेत्तुर्ज्येष्ठभ्रातुरेक नाम । (२) पट्—विवाहस्य । (३) पञ्च मैथुनस्य । (४) एक त्रिवर्गस्य । (५) एक चतुर्वर्गस्य । (६) धर्मार्थकाम-बलैश्चतुर्भद्रमित्यर्थः । (७) एक वरपक्षीयाणाम् । [वराती] ।

—:❀:—

(८) पञ्च क्षत्रियस्य नामानि । तत्र—विराट्—जान्त, सर्वे पुंसि ।
(९) सप्त राज्ञ. । तत्र—राजा नान्तः, राट्—जान्त., क्ष्माभृन्महीक्षितौ तान्तौ ।
(१०) स्वदेशसमीपराज्याधिपस्य राज्ञो नामैकम्—'अधीश्वर' इति ।

[1]चक्रवर्ती सार्वभौमो नृपो[2]ऽन्यो मण्डलेश्वरः॥२॥
येने[3]ष्टं राजसूयेन मण्डलस्येश्वरश्च यः।
शास्ति यश्चाज्ञया राज्ञः स सम्राडथ [4]राजकम्॥
राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्।
[5]मन्त्री धीसचिवोऽमात्योऽन्ये क[6]र्मसचिवास्ततः॥
महामात्राः प्रधानानि [7]पुरोधास्तु पुरोहितः।
[8]द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥५॥

---

( १ ) समुद्रान्तपृथिवीश्वरस्य द्वे नामनी। तत्र चक्रवर्ती नान्तः। ( २ ) स्वल्पभूभागाधिपतेरेकम्। ( ३ ) राजसूययज्ञकर्तुश्चक्रवर्त्तिन एकम्। केचित्तु—राजसूयकर्ता—सम्राट्, द्वादशराजमण्डलाधिपोऽपि—सम्राट्, सर्वनृपतिशासकोऽपि—सम्राट्—इति पृथक्पृथङ्नामत्रयमित्याहुः। सम्राट्—नान्तः। ( ४ ) नृपतिसमूहस्य, क्षत्रियसमूहस्य चैकं क्लीबे। ( ५ ) त्रीणि मन्त्रिणः। तत्र मन्त्री—नान्तः। ( ६ ) त्रीणि प्रधानानां कर्मसहायानाम्। प्रधानशब्दः क्लीबे, पुंल्लिङ्गोऽपि बोपालितकोशप्रामाण्यात्। ( ७ ) द्वे राजपुरोहितस्य—धर्माध्यक्षस्य। तत्र पुरोधाः सान्तः पुंसि। ( ८ ) द्वे व्यवहारनिर्णायकानाम्।

प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ।
रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ ॥६॥
स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ।
भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ॥७॥
अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः ।
सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥८॥
शण्ढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः ।

(१) पञ्च द्वारपालस्य [दरवान]। (२) द्वे रक्षकाणाम्। [सिपाही]। (३) द्वे अधिकारिणः। (४) एकं ग्रामाध्यक्षस्य [स्थायुक = ठाकुर]। (५) बहुग्रामाधिकृतस्यैकम्। (६) सुवर्णाध्यक्षस्य द्वे। (७) रूप्याध्यक्षस्य द्वे ['टकसाल का अधिकारी']। (८) एकमन्तःपुराधिकृतस्य। (९) चत्वारि राजान्तःपुररक्षकविशेषस्य। तत्र कञ्चुकी नान्तः। (१०) द्वे वर्षवरस्य ['खोजा'] तदुक्तम्—

"येत्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः।
जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः॥" इति।

शण्ढः, षण्ढोऽपि, पण्ढोपि च। (११) त्रीणि सेवकस्य त्रिषु। अर्थ्यनुजीविनौ नान्तौ।

विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥९॥
उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ।
रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥१०॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः ।
अभिघातिपराराातिप्रत्यर्थिपरिपन्थिनः ॥११॥
वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् ।
सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥१२॥
यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।

---

( १ ) स्वदेशसमीपदेशस्य राज्ञ एकम् । ( २ ) अत = शत्रो, पर — मित्रमिति एक नाम क्लीवे । अत = स्वदेशादिति तु गौडाः । (३) स्वदेशात्परतरस्य राज्ञ एकम् । (४) विजिगीषुपृष्ठस्थितस्य राज्ञ एकम् । ( ५ ) ऊनविंशति.— ( २१ )—शत्रो. । वैरि–प्रत्यर्थि–परिप·थ्यभिघातिनो नान्ता· । द्विषत्—तान्तः, द्विट्—षान्त, दुर्हृत्–दान्तः । ( ६ ) त्रीणि तुल्यवयस., सवया सान्त । ( ७ ) त्रीणि मित्रस्य, सखिशब्द इकारान्त, सुहृदान्त. । ( ८ ) मित्रताया द्वे । ( ९ ) द्वे अनुरोधस्य, स्वजनानामिष्ट सम्पादनस्य । [ 'दूसरे की बात रखना' ] । ( १० ) सप्त चारस्य [ 'खुफिया' 'जासूस' ] ।

चारश्च गूढपुरुषश्[1]चाप्तप्रत्ययितौ समौ ॥१३॥
[2]सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।
स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥१४॥
[3]तान्त्रिको ज्ञातसिद्धान्तः [4]सत्री गृहपतिः समौ ।
[5]लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥१५॥
[6]लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ ।
[7]स्यात्संदेशहरो दूतो [8]दूत्यं तद्भावकर्मणी ॥१६॥
[9]अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।

---

( १ ) द्वे विश्वस्तस्य त्रिषु—[ विश्वासी ]। ( २ ) अष्टौ ज्यौतिषिकस्य, ['ज्योतिषी' 'जोसी'] । ( ३ ) तत्त्वज्ञस्य द्वे । सिद्धान्तज्योतिषवेत्तुरिति गौडाः। ( ४ ) द्वे सर्वदाऽन्नादिदानकर्तुः। सत्री नान्तः । [ सत्र = सदाव्रत, क्षेत्र । देने वाला—सत्री, यजमान ] । ( ५ ) चत्वारि लेखकस्य, ['लिखारी']। ( ६ ) द्वे लेखनस्य । उभे स्त्रियाम् । [ लिखना ]। चत्वारि नामानीति परे। ( ७ ) द्वे दूतस्य। ( ८ ) एकं दूतकर्मणः, दूतभावस्य च, दौत्यमित्यपि नाम। 'दूत्यं तद्भागकर्मणी'त्यपि पाठः। (९) पञ्च पथिकस्य [ 'बटाऊ' ] ।

¹स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥१७॥
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च।
²सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः॥१८॥
षड्गुणाः ³शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः।
⁴क्षयःस्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् १९

( १ ) राज–मन्त्रि–मित्र–कोश–देश–वनदुर्ग–सैन्यानि सप्त राज्याङ्गानि प्रकृतिपदवाच्यानि । पुरवासिलोकसङ्घरूपाश्रेणिरपि–अष्टममङ्गं, तदपि प्रकृतिपदवाच्यम् । तदेव–राज्यमष्टाङ्ग–प्रकृतिरित्यर्थ । [ श्रेणि = पश्चायत ]। ( २ ) सन्ध्यादयोऽष्टौ—गुणाः । तत्र सन्धि पुसि । एव विग्रहाश्रयावपि । तत्र सन्धिः—मैत्री । विग्रहः—युद्धम् । यानं—शत्रुं प्रति युद्धाय यानम्, [चढाई] । आसनं—स्वस्थान एव स्थिति । द्वैधं—सन्धिरेकेन, युद्धमेकेन यथायथम्। सन्धिर्युद्धश्चेति वा अविश्वासश्च । आश्रयः–बलवदरिणा पीड्यमानस्य धार्मिकराजाश्रयणम् । ( ३ ) कोशसेनाबलं—प्रभुशक्ति', पराक्रमबलमुत्साहशक्ति । सन्धिविग्रहादीनां सामदानादीनाञ्च यथावदनुष्ठान निश्चयो वा—मन्त्रशक्तिः । एक तिसृणां शक्तीनाम् ।

(४) राजनीतौ–क्षयः, साम्यं, वृद्धिश्चाष्टवर्गस्य त्रिवर्गपदेनोच्यते। अष्ट-वर्गश्च—कृषिर्वणिक्पथो दुर्गं सेतु कुञ्जरबन्धनम् । खन्याकरबलादान शून्यानाञ्च निवेशनम् ॥" इति ।

स [1]प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ।
[2]सामदाने भेददण्डावित्युपायचतुष्टयम् ॥२०॥
[3]साहसं तु दमो दण्डः [4]साम सान्त्वमथो समौ ।
[5]भेदोपजापावुपधा [6]धर्माद्यैर्यत्परीक्षणम् ॥२१॥
पञ्च [7]त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः ।
विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥२२॥
रहश्चोपांशु चालिङ्गे [9]रहस्यं तद्भवे त्रिषु ।
[10]समौ विस्रम्भविश्वासौ [11]भ्रेषो भ्रंशो यथोचितात् २३

---

(१) द्वे कोशसेनोत्थिततेजस । (२) उपायचतुष्टयस्यैकैकम् । तत्र—साम नान्त क्लीबे । (३) त्रीणि दण्डस्य । (४) द्वे साम्नः (५) मिलितयोर्द्वैधीकरणस्य द्वे । (६) अमात्यादेर्भयलोभादिना परीक्षणस्य । उपधा स्त्रियाम् । वक्ष्यमाणा निश्शलाकान्ता.—पञ्च त्रिषु । (७) तृतीयपुरुषाद्यश्रुतस्य—द्वाभ्यामेव कृतस्य मन्त्रादे —त्रिपु ।

(८) सप्त एकान्तस्य । तत्र—रहः सान्तं क्लीबे, अव्ययमपि रहः । उपांशु—अव्ययम् । (९) रहसि भवस्यैक—त्रिपु । (१०) विश्वासस्य द्वे । विश्रम्भोपि । (११) द्वे यथोचितस्वरूपादध पतनस्य ।

[1]अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।
[2]युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥२४॥
न्याय्यं च त्रिषु षट् [3]संप्रधारणा तु समर्थनम् ।
[4]अववादस्तु निर्देशो निदेशः शासनं च सः॥२५॥
शिष्टिश्चाज्ञा च [5]संस्था तु मर्यादा धारणा स्थितिः।
[6]आगोऽपराधोमन्तुश्च [7]समे तूद्दानबन्धने ॥२६॥
[8]द्विपाद्यो द्विगुणो दण्डो [9]भागधेयः करो बलिः ।
[10]घट्टादिदेयं शुल्कोऽस्त्री [11]प्राभृतं तु प्रदेशनम् ।२७।

(१) पश्च उचितस्य। (२) षट् न्यायागतस्य । इमानि युक्तादीनि षट्—त्रिषु । (३) इदमुचितमिदमनुचितमित्यादिनिश्चयस्य द्वे। (४) षट् आज्ञाया । [ हुक्म ]। (५) न्यायमार्गस्थितेः—मर्यादायाश्चत्वारि । (६) त्रीण्यपराधस्य, तत्रागः सान्तं क्लीवम् ।

(७) द्वे बन्धनस्य क्लीवे । (८) शास्त्रबोधितदण्डात् द्विगुणस्य दण्डस्यैकम् । (९) त्रीणि कृषकादितो राजग्राह्यभागस्य, तत्र बलिः पुंसि । [ 'लगान' 'कर' ]। (१०) एकं घट्टादिदेयस्य—शुल्कस्य, [ 'फीस' 'चुंगी' 'महसूल' 'लाग' आदि ]। (११) षट् देवतागुरुमित्रादिभ्यो दीयमानस्य वस्तुन [ 'भेंट' 'उपहार' 'नजर' 'सौगात' ]

उपायनमुपग्राह्यमुपहारस्तथोपदा ।
[1]यौतकादि तु यद्देयं सुदायो हरणं च तत् ।२८।
[2]तत्कालस्तु तदात्वं स्यादु[3]त्तरः काल आयतिः ।
[4]सांदृष्टिकं फलं सद्य उ[5]दर्कः फलमुत्तरम् ।२९।
[6]अदृष्टं वह्नितोयादि [7]दृष्टं स्वपरचक्रजम् ।
[8]महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥३०॥
[9]प्रक्रिया त्वधिकारः स्या[10]च्चामरं तु प्रकीर्णकम् ।
[11]नृपासनं यत्तद्भद्रासनं [12]सिंहासनं तु तत् ॥३१॥

(१) कन्यादानकाले पूजादौ च दीयमानस्य द्वे । [ 'दहेज' ] । (२) द्वे वर्तमानकालस्य । (३) एकमुत्तरकालस्य स्त्रियाम् । (४) एकं सद्यो जायमानस्य फलस्य । ( ५ ) भाविन. कर्मफलस्यैकम् ।

( ६ ) एकमग्न्यादिभयस्य । तदुक्त—"हुताशनो जल व्याधिर्दुर्भिक्ष मरकस्तथा । अतिवृष्टिरनावृष्टिर्मूषका शलभाः शुकाः ॥" इति । ( ७ ) स्वसैन्यात्, परसैन्यात्, चौरादेश्च भयस्यैकम् । ( ८ ) स्वपक्षोत्थितस्य भयस्यैकम् । (९) द्वे राज्ञ छत्रधारणादिव्यापारस्य । अधिकारस्येत्येके । (१०) द्वे चामरस्य, [ 'चँवर' ] (११) द्वे मण्यादिकृतराजासनस्य, (१२) सुवर्णनिर्मितराजासनस्यैकम् ।

हैमं [1]छत्रं त्वातपत्रं [2]राज्ञस्तु नृपलक्ष्म तत् ।
[3]भद्रकुम्भः पूर्णकुम्भो [4]भृङ्गारः कनकालुका ॥३२॥
[5]निवेशः शिबिरं षण्डे [6]सज्जनं तूपरक्षणम् ।
[7]हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥३३॥
[8]दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥३४॥
इभः स्तम्बेरमः पद्मी [9]यूथनाथस्तु यूथपः ।
[10]मदोत्कटो मदकलः [11]कलभः करिशावकः ॥३५॥

---

(१) द्वे छत्रमात्रस्य। (२) एकं राजचिह्नभूतस्यच्छत्रस्य, नृपलक्ष्म नान्तम्। (३) द्वे पूर्णघटस्य। (४) द्वे सुवर्णकृतजलपात्रविशेषस्य ['झारी']। (५) द्वे सेनानिवेशस्य, शिबिरं षण्ढे = क्लीबे। ['पड़ाव' 'छावनी']

(६) सैन्यरक्षणाय प्रहरिकादिन्यासस्य द्वे—क्लीबे। ['पहरा चौकी का प्रबन्ध'] (७) हस्तिनश्च अश्वाश्च रथाश्च पादातश्चसेनाङ्गम्। (८) पञ्चदश हस्तिन। तत्र दन्तिहस्तिकरिपद्मिनो नान्ताः। (९) यूथमुख्यस्य हस्तिनो द्वे। (१०) अन्तर्मदस्य हस्तिनो द्वे। (११) द्वे हस्तिपोतस्य। [हाथी का बच्चा]

[1]प्रभिन्नो गर्जितो मत्तः [2]समावुद्वान्तनिर्मदौ ।
[3]हास्तिकं गजता वृन्दे [4]करिणी धेनुका वशा ३६
[5]गण्डः कटो [6]मदो दानं [7]वमथुः करशीकरः ।
[8]कुम्भौ तु पिण्डौ शिरस[9]स्तयोर्मध्ये विदुःपुमान्
[10]अवग्रहो ललाटं स्या[11]दीषिका त्वक्षिकूटकम् ।
[12]अपाङ्गदेशो निर्याणं [13]कर्णमूलं तु चूलिका॥३८॥
[14]अधः कुम्भस्य वाहित्थं [15]प्रतिमानमधोऽस्य यत् ।
[16]आसनं स्कन्धदेशः स्या[17]त्पद्मकं बिन्दुजालकम् ३९

---

( १ ) जातमदस्य द्वे । ( २ ) द्वे गतमदस्य । ( ३ ) द्वे हस्तिवृन्दस्य । ( ४ ) त्रीणि हस्तिन्याः स्त्रियाम् । ( ५ ) द्वे गजगण्डयोः । (६) द्वे गजमदस्य । (७) द्वे शुण्डानिर्गतजलकणस्य । (८) एकं गजकुम्भस्य । (९) गजकुम्भमध्यभागस्यैकम् । (१०) एक हस्तिललाटस्य । (११) द्वे हस्त्यक्षिगोलकस्य । एकमेवेत्येके इषीकापि । (१२) गजापाङ्गदेशस्यैकम् । (१३) गजकर्णमूलस्यैक स्त्रियाम् । (१४) एक गजकुम्भाधोभागस्य । ( १५ ) एक वाहित्थाधोभागस्य दन्तमध्यस्य । ( १६ ) द्वे गजस्कन्धदेशस्य । ( १७ ) द्वे गजमुखादिस्थबिन्दुसमूहस्य ।

[१] पार्श्वभागः पक्षभागो [२] दन्तभागस्तु योऽग्रतः ।
[३] द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥४०॥
[४] तोत्रं वेणुक[५]मालानं बन्धस्तम्भेऽथ [६] शृङ्खले ।
अन्दुको निगडोऽस्त्री स्या[७]दङ्कुशोऽस्त्री सृणिः स्त्रियाम्
[८] दूष्या कक्ष्या वरत्रा स्या[९]त्कल्पना सज्जना समे ।
[१०] प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥४२॥
[११] वीतं त्वसारं हस्त्यश्वं [१२] वारी तु गजबन्धनी ।
[१३] घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः ॥४३॥

( १ ) द्वे गजपार्श्वभागस्य । ( २ ) एक गजाग्रभागस्य । ( ३ ) गजपूर्वजङ्घाम.गो–गात्र, गजस्य पश्चाज्जङ्घाभागोऽवरम् । ( ४ ) द्वे ताडनदण्डस्य [ 'चाबुक' 'छडी' ] । ( ५ ) द्वे गजबन्धनस्तम्भस्य । (६) त्रीणि शृङ्खलाया ['सांकल' बेडी ] अङ्कुशोऽस्त्रियाम् । ( ७ ) द्वे अङ्कुशस्य । (८) त्रीणि गजमध्यबन्धनस्य [ 'पेटी' 'कमरबन्द' ] ( ९ ) द्वे पल्याणाद्यारोपणेन सज्जीकरणस्य [ 'कटेड़ा लगाना' 'कुर्शी लगाना' ] (१०) पञ्च गजास्तरणचित्रकम्बलस्य, प्रवेणी स्त्रियां, कुथ स्त्रीपुंसयो कुथ केचित्क्लीबेप्याहु । [ 'झूल' ] (११) एक निर्बलहस्त्यादिसमूहस्य । (१२) गजबन्धनशालाया द्वे । [ 'फीलखाना' ] (१३) त्रयोदशाश्वानाम् । पीतिर्वीतिश्च । वाजी नान्तः ।

वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।
[1]आजानेयाःकुलीनाः स्युर्विनीताः[2] साधुवाहिनः॥४४
[3]वनायुजाः पारसीकाः काम्बोजा बाह्लिका हयाः ।
[4]ययुरश्वोऽश्वमेधीयो [5]जवनस्तु जवाधिकः ॥४५॥
पृष्ठ्यः[6] स्थौरी सितः[7] कर्को [8]रथ्यो वोढा रथस्य यः
[9]बालः किशोरो [10]वाम्यश्वा वडवा [11]वाडवं गणे४६
[12]त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।
[13]कश्यं तु मध्यमश्वानां [14]हेषा ह्रेषा च निःस्वनः॥४७

(१) द्वे कुलीनाश्वानाम् । (२) द्वे शिक्षिताना साधुगच्छतामश्वादीनाम्, [ 'सिखाए हुए घोड़े' ] (३) एकैकं वनायुजादिदेशोद्भवानामश्वानाम् । केचित्तु—"द्वे पारसीकदेशाश्वानाम्, द्वे-काम्बोजाश्वानामित्याहुः ।

(४) द्वे-अश्वमेधार्हाश्वस्य पुंसि । (५) द्वे अधिकवेगस्याश्वस्य । (६) भारवाहिनोऽश्वस्य द्वे । स्थौरी नान्त । (७) एकं शुक्लाश्वस्य । (८) रथवाहकस्याश्वस्यैकम् । (९) अश्वबालकस्यैकम् [ 'बछेरा' ] (१०) त्रीणि वडवायाः [ 'घोडी' ] (११) एकं वडवासमूहस्य । (१२) अश्वेन दिनैकेन गमनार्हस्य प्रदेशस्यैकं-त्रिषु । (१३) अश्वमध्यभागस्यैकम् । (१४) द्वे अश्वशब्दस्य स्त्रियाम् । [ 'हिनहिनाना' ]

[1]निगालस्तु गलोद्देशो [2]वृन्दे त्वश्वीयमश्ववत् ।
[3]आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ४८
गतयोऽमूः पञ्च धारा [4]घोणा तु प्रोथमस्त्रियाम् ।
[5]कविका तु खलीनोऽस्त्री [6]शफं क्लीबे खुरः पुमान् ४९
[7]पुच्छोऽस्त्री लूमलाङ्गूले [8]वालहस्तश्च वालधिः ।
[9]त्रिषूपावृत्तलुठितौ [10]परावृत्ते मुहुर्भुवि ॥५०॥
[11]याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ।
[12]असौ पुष्यरथश्चक्रयानं न समराय यत् ॥५१॥

---

(१) एकं गलजत्रुसन्धेः । (२) द्वे अश्वसमूहस्य । (३) अश्व गतिविशेषाणां पञ्चानां 'धारा' इति नामधेयम् । गतिविशेषाणामेकैकम् । (४) एकमश्वनासिकायाः । प्रोथमस्त्रियाम् । (५) द्वे कविकायाः [ 'लगाम का कड़ा' ] (६) द्वे खुरस्य, शफं क्लीबे, खुरः पुमान् ।

(७) त्रीणि पुच्छस्य, पुच्छोऽस्त्रियां, लूमलाङ्गूले क्लीबे । (९) केशवल्लाङ्गूलस्य द्वे । (१०) द्वे श्रमापनोदनाय मुहुर्भूमौ लुठितस्याश्वादेः त्रिषु [जमीन में लोटा हुआ] । (११) त्रीणि युद्धयानस्य रथस्य । (१२) एकं सुखभ्रमणार्थस्य यानस्य ।

[1]कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।
[2]क्लीबेऽनः शकटोस्त्री [3]स्याद्गन्त्री कम्बलिवाह्यकम्
[4]शिबिका याप्ययानं [5]स्याद्दोला प्रेङ्खादिका स्त्रियाम्
[6]उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥५३॥
[7]पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।
[8]रथे काम्बलवस्त्राद्याः कम्बलादिभिरावृते ॥५४॥
त्रिषु द्वैपादयो [9]रथ्या रथकट्यां रथव्रजे ।
[10]धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः[11] ॥५६॥

---

(१) त्रीणि पुरुषस्कन्धवाह्यमानस्य ['डोली'] (२) द्वे शकटस्य, अनः सान्तं क्लीबे, शकटोऽस्त्रियाम् । [ 'सगड' 'बैल गाडी' ] ( ३ ) कम्बलपरिवृतैर्वृषैरुह्यमानस्य रथस्य द्वे [ बहली'] । ( ४ ) द्वे शिबिकायाः [पालकी] ( ५ ) द्वे दोलाया , [ 'हिंडोला' ] प्रेङ्खः पुंसि, प्रेङ्खा स्त्रियाम् । (६) व्याघ्रचर्मप्रावृतस्य रथस्य द्वे । त्रिषु । ( ७ ) शुक्लकम्बलपरिवेष्टितस्य रथस्यैकम् । त्रिषु । नान्तोऽयम् । ( ८ ) कम्बलादिभिरावृतस्य रथस्यैकैक त्रिषु । द्वीपादयो वाक्षान्ता — त्रिषु । (९) त्रीणि रथसमूहस्य । (१०) द्वे वृषादिबन्धनस्थानस्य । धूः शब्दो रान्त. स्त्रियाम् । (११) द्वे चक्रभिन्नरथाङ्गस्य ।

[1]चक्रं रथाङ्गं [2]तस्यान्ते नेमिः स्त्री स्यात्प्रधिःपुमान्
[3]पिण्डिकानाभिर्[4]क्षाग्रकीलके तु द्वयोरणिः॥५६॥
[5]रथगुप्तिर्वरूथो ना [6]कूबरस्तु युगन्धरः।
[7]अनुकर्षो दार्वधःस्थं [8]प्रासङ्गो ना युगान्तरम्॥५७॥
[9]सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्।
[10]परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम्॥५८॥
[11]आधोरणा हस्तिपका हस्त्यारोहा निषादिनः।

---

(१) द्वे चक्रस्य क्लीबे [ 'पहिया' ] (२) चक्रप्रान्तभागस्य द्वे। नेमि स्त्रियाम्, प्रधि पुंसि। (३) द्वे चक्रमध्यममण्डलाकार पिण्डिकाया, नाभि पुंसि। (४) नाभिप्रक्षेप्याक्षाग्रकीलकस्य द्वे। अणिर्द्वयो। (५) परप्रहाररक्षार्थं कृतस्यावृतस्थानस्य द्वे [ छप्पर ]। (६) युगकाष्ठबन्धनस्थानस्य द्वे। (७) रथाधस्तलभागदारुण एकम्। अनुकर्षो नान्तोपि पुंसि। (८) रथाङ्गभूतयुगकाष्ठादन्यत् युग वृषदमन-काले यदासज्यते तस्यैक नामधेयम्। केचित्तु—वृषयुग्मान्तरबन्धनाय स्थापितस्य युगान्तरस्येत्याहु। (९) पञ्च वाहनमात्रस्य। [ सवारी ]। (१०) एकं परम्परावाहनस्य। यथा रथारूढ शकट परम्परावाहनम् [डोली]। (११) चत्वारि हस्तिपकस्य। [ 'महावत' 'फीलवान' ]।

[1]नियन्ता प्राजिता यन्ता सूतःक्षत्ता च सारथिः ५९
सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः।
[2]रथिनःस्यन्दनारोहा [3]अश्वारोहास्तु सादिनः।६०।
[4]भटा योधाश्च योद्धारः [5]सेनारक्षास्तु सैनिकाः।
[6]सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ६१
[7]बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः।
[8]परिधिस्थः परिचरः [9]सेनानीर्वाहिनीपतिः॥६२॥
[10]कञ्चुको वारवाणोऽस्त्री [11]यत्तु मध्ये सकञ्चुकाः।

---

(१) षट् सारथे. ['रथवान' 'गाडीवान']। नियन्तृ—प्राजितृ-यन्तृ-क्षत्तृ-सव्येष्टर—ऋकारान्तः। सव्येष्ठोऽकारान्तोपि रथकुटुम्बी नान्त। (२) रथारूढस्य योधस्य द्वे। (३) द्वे अश्वारोहस्य ['असवार']। (४) त्रीणि भटानाम्। [ 'फौजी सिपाही' ]। (५) सेनारक्षकाणां द्वे। [ 'सन्तरी' ]। (६) सेनासमवेतानां सैनिकानां द्वे। (७) द्वे सहस्राधिपानां सेनापतीनाम् [ 'हजारी' ] सहस्री नान्तः। (८) द्वे दण्डधारिण, गजपाद—रथचक्रादि-रक्षक-स्येत्यन्ये। (९) द्वे सेनापतेः। (१०) द्वे चोलकाकृतिसन्नाहस्य, वारवाणोऽस्त्रियाम्। (११) कञ्चुकदार्ढ्याय मध्येबद्धस्य [ कमरबन्दा ]। अधिपाङ्गधिपाङ्गाप्यत्रैव।

बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम् ६३

शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् ।

उरच्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ।६४।

आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।

संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥६५॥

त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे ।

पदातिपत्तिपदगपादातिकपदाजयः ॥ ६६ ॥

पद्गश्च पदिकश्चाऽथ पादातं पत्तिसंहतिः ।

शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥६७

कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।

---

(१) त्रीणि शिरस्त्रस्य, [टोप] । (२) सप्त कवचस्य । वर्म नान्त क्लीबे । (३) परिहितवस्त्रकञ्चुकादेश्चत्वारि त्रिषु । [ 'पहिना हुआ वस्त्र आदि' ] (४) धृतकवचस्य पञ्च,—त्रिषु । आमुक्तादयस्त्रिषु । (५) कवचिसमूहस्यैकम् । (६) सप्त पदाते [ 'पैदल सिपाही आदि' ] । (७) द्वे पदातिसमूहस्य । (८) चत्वारि शस्त्रजीविनाम् त्रिषु । (९) सम्यक्कृतबाणाभ्यासस्य त्रीणि ।

[1]अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः॥६८॥
[2]धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः
[3]स्यात्काण्डवांस्तु काण्डीरः[4]शाक्तीकः शक्तिहेतिकः
[5]याष्टीकपारश्वधिकौ यष्टिपरश्वधहेतिकौ ।
नैस्त्रिं[6]शिकोऽसिहेतिः[7]स्यात्समौ प्रासिककौन्तिकौ
[8]चर्मी फलकपाणिः[9]स्यात्पताकी वैजयन्तिकः ।
[10]अनुप्लवः सहायश्चानुचरोऽभिचरः समाः ॥७१॥
[11]पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ।
पुरोगमः पुरोगामी [12]मन्दगामी तु मन्थरः॥७२॥

---

(१) एक लक्ष्यच्युतबाणस्य पुंसि त्रिपु । (२) षड् धनुर्धरस्य, धनुष्मान् शान्त', धन्विनिषङ्गिणौ नान्तौ—त्रिपु । (३) बाणधारकस्य द्वे—त्रिपु। (४) शक्त्याख्यायुधधारिणो द्वे त्रिपु । (५) यष्टिधारिण एकम् । परशुधारिणश्चैकम् । त्रिपु। ( ६ ) द्वे खड्गायुधस्य । त्रिपु। ( ७ ) प्रासकुन्तायुधधारिणोरेकैकम् । त्रिपु। (८) चर्मधारिणो द्वे त्रिपु। [ 'ढाल' वाला ]। (९) द्वे ध्वजधारकस्य त्रिपु । [ 'झण्डे वाला' ]। ( १० ) चत्वारि अनुचरस्य । (११) सप्ताग्रेसरस्य [ 'अगुआ' ] त्रिपु। (१२) शनैर्गमनशीलस्य द्वे त्रिपु।

जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ ।
तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥७३॥
जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ।
जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ७४
सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि
ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जातिशयान्वितः ७५
स्यादुरस्वानुरसिलो रथिनो रथिको रथी ।
कामं गाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् ७६
शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः ।
सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ७७

(१) द्वे [illegible] त्रिषु । (२) द्वे जङ्घाजीविनः त्रिषु । [ 'हरकारा' ] । (३) षट् [illegible] । (४) [illegible] जेतुं शक्यस्य त्रिषु । (५) [illegible] जेतुं योग्यस्य त्रिषु । (६) द्वे जेतुः [ जीतने वाला ] त्रिषु । (७) [illegible] त्रिषु । (८) [illegible] । [illegible] (९) [illegible] त्रिषु । (१०) [illegible] । [illegible] (११) [illegible] । (१२) [illegible] (१३) [illegible] । (१४) [illegible] । (१५) [illegible] (१७) [illegible] (१८) त्रिषु ।

[1]ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ७८
[2]व्यूहस्तु बलविन्यासो भेदा[3] दण्डादयो युधि।
[4]प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे[5] प्रतिग्रहः।७९।
[6]एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका।
[7]पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ८०
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः।

---

(१) एकादश सेनायाः। (२) द्वे व्यूहरचनायाः। तदुक्तं—मुखे रथा हया पृष्ठे तत्पृष्ठे च पदातय। पार्श्वयोश्च गजा कार्या व्यूहोऽयमुच्यते बुधै.। (३) दण्डचक्रभोगमण्डलशकटादयो व्यूहविशेषाः। (४) द्वे व्यूहपृष्ठभागस्य। व्यूहपार्ष्णिर्द्वयोः। (५) सैन्यपृष्ठे स्थितस्य सैन्यस्यैकम्। ['कुमक']। (६) 'पत्ति'रिति स्त्रियां सेनाविशेषस्य नाम। तदुक्तम्—"एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते॥' इति। (७) तिस्रः पत्तय.—सेनामुखम्। त्रीणि सेनामुखानि—गुल्मः। त्रयो गुल्मा गणः। त्रयो गणाः—वाहिनी। तिस्रो वाहिन्य.—पृतना. तिस्रः पृतनाश्चमूः। तिस्रश्चम्वोऽनीकिनी।

अनीकिनी दशानीकिन्य[1]क्षौहिण्यथ संपदि॥८१॥
संपत्तिः श्रीश्च लक्ष्मीश्च [2]विपत्त्यां विपदापदौ।
[3]आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ॥८२॥
[4]धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।
इष्वासोऽप्यथ कर्णस्य [5]कालपृष्ठं शरासनम् ८३
कपिध्वजस्य [6]गाण्डीवगाण्डिवौ पुंनपुंसकौ ।
[7]कोटिरस्याटनी [8]गोधे तले ज्याघातवारणे ॥८४॥
[9]लस्तकस्तु धनुर्मध्यं [10]मौर्वी ज्या शिञ्जिनी गुणः।

---

(१) दशानीकिन्य —अक्षौहिणी । अक्षौहिण्याः प्रमाणन्तु —खागाष्टैकाक्षिभिर्गजै [ २१८७० ] । रथैरेतै, हयैस्त्रिघ्नैः— [ ६५६१० ], पञ्चघ्नैश्च पदातिभिः [ १०९३५० ] ।

(२) चत्वारि धनोत्कर्षस्य स्त्रियाम् । (३) त्रीणि विपत्तेः । (४) चत्वारि शस्त्राणाम् । (५) सप्त धनुषः । धनुः षान्तं पुनपुंसकयोः । उकारान्तोपि धनुः पुंसि, धनूरपि स्त्रियाम् । धन्व नान्तं क्लीबे । धन्वादिकार्मुकान्तं क्लीबे । (६) एकं कर्णस्य धनुषः । (७) द्वे अर्जुनधनुषः । (८) धनुषोऽन्त्यभागस्य द्वे स्त्रियाम् [ 'कोना' ] । (९) ज्याऽऽघातवारणस्य द्वे । (१०) धनुर्मध्यभागस्यैकम् । (११) चत्वारि धनुषो गुणस्य [ 'डोरी' ] ।

[1]स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ८५
[2]लक्षं लक्ष्यं शरव्यं च [3]शराभ्यास उपासनम् ।
[4]पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥८६॥
कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।
[5]प्रक्ष्वेडनास्तु नाराचाः [6]पक्षो वाजस्त्रिषूत्तरे॥८७॥
[7]निरस्तः प्रहिते बाणे [8]विषाक्ते दिग्धलिप्तकौ ।
[9]तूणोपासंगतूणीरनिषंगा इषुधिर्द्वयोः ॥८८॥
तूण्यां [10]खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ।
कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ॥८९॥

---

(१) पञ्च धन्विनां स्थानभेदानाम् । आदिना समपदविशाखमण्डलाः । (२) त्रीणि लक्ष्यस्य [ निशाना ] । (३) शरक्षेपाभ्यासस्य द्वे । (४) द्वादश बाणस्य । पत्री नान्तः । इषुर्द्वयोः । (५) द्वे सर्वलोहमयस्य शरस्य । (६) द्वे शरपक्षस्य [ बाण के पीछे बाँधने की गृध्र की पांख ] । वक्ष्यमाणा लिप्तकान्ता त्रिषु । (७) एकं प्रक्षिप्तबाणस्य त्रिषु । (८) द्वे विषलिप्तबाणस्य त्रिषु । (९) षट् तूणीरस्य । इषुधिः स्त्री-पुंसयोः । तूणी स्त्रियाम् [ 'बाण रखने की भाथी' ] । (१०) नव खड्गस्य ।

[1]त्सरुः खड्गादिमुष्टौ [2]स्यान्मेखला तन्निबन्धनम् ।
[3]फलकोऽस्त्री फलं चर्म [4]संग्राहो मुष्टिरस्य यः ९०
[5]द्रुघणो मुद्गरघनौ [6]स्यादीली करवालिका ।
[7]भिन्दिपालः सृगस्तुल्यौ [8]परिघः परिघातिनः ९१
[9]द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।
[10]स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका
[11]वा पुंसि शल्यं शङ्कुर्ना [12]सर्वला तोमरोऽस्त्रियाम्
[13]प्रासस्तु कुन्तः [14]कोणस्तु स्त्रियः पाल्यश्रिकोटयः ।

---

(१) एक खड्गमुष्टेः [मूठ] । (२) खड्गादेश्चर्मादिनिर्मितकटिबन्धनस्य [पट्टा] । युद्धे खड्गस्य हस्तात्पतनवारणाय मणिबन्धे बध्यमानस्य चर्मादेर्वा । (३) त्रीणि चर्मणः [ 'ढाल' ] चर्म नान्त क्लीबे । (४) एक फलकमुष्टे [ढाल की मूठ] । (५) त्रीणि मुद्गरस्य [ 'मोगरी' ] । (६) द्वे करवालिकाया [ 'तरवार'– 'गुप्ती' ] । (७) द्वे अश्मप्रक्षेपसाधनस्य भिन्दिपालस्य ['गोफण' और 'बन्दूक'] (८) लोहबद्धलगुडभेदस्य द्वे ['लोहांगी'] । (९) चत्वारि कुठारस्य । स्वधितिः स्त्री । (१०) चत्वारि छुरिकाया । (११) द्वे बाणाग्रभागस्य । शल्यम्य वा शल्यं पुंनपुंसकयोः, शंकु पुंसि । [ 'बाण का फल' या 'सेल' ] । (१२) द्वे तोमरस्य [ 'गडासा' ] । (१३) द्वे प्रासस्य [ 'भाला' ] । (१४) चत्वारि खड्गादिप्रान्तभागस्य । पाल्यादय स्त्रियाम् [ 'कोना' ] ।

१ सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः ।
२ लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ९४
३ यत्सेनयाऽभिगमनमरौ तदभिषेणनम् ।
४ यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः ९५
५ स्यादासारः प्रसरणं ६ प्रचक्रं चलितार्थकम् ।
७ अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः ॥९६॥
८ वैतालिका ९ बोधकराश्चाक्रिका घाण्टिकाऽर्थकाः ।
१० स्युर्मागधास्तु मगधा ११ बन्दिनः स्तुतिपाठकाः ९७

---

(१) सर्वसैन्यसन्नाहस्य त्रीणि । (२) एकं शारदनवरात्र महानवम्यां सर्वशास्त्रवाहनादिपूजायाः । [ घोडे आदि की पूजा आरती ] । (३) अरिं प्रति सेनया सह गमनस्यैकम् । [ 'चढाई' ] । (४) पट् यात्रायाः । (५) सर्वतोव्यापिसैन्यप्रसरणस्य द्वे । (६) द्वे प्रस्थितस्य सैन्यस्य । (७) युद्धे शत्रून्प्रति निर्भय यानस्यैकम् । [ झपटना ] । (८) द्वे राज्ञां प्रातर्जागरकारिणं । (९) द्वे घटिकावादकस्य । [ 'घंटा घडियाल बजानेवाला' ] 'घण्टिकार्थका' इत्यपि पाठ । (१०) द्वे वंशावलिस्तुति-पाठकानाम् । (११) द्वे बन्दिनाम् । चत्वार एकार्था इति तु परे । ['भाट'] ।

[1]संशप्तकास्तु समयात्संग्रामादनिवर्तिनः ।
[2]रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः ९८
[3]चूर्णे क्षोदः [4]समुत्पिञ्जपिञ्जलौ भृशमाकुले ।
[5]पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ९९
[6]सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा ।
[7]अहंपूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ॥१००॥
[8]आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ।
[9]अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः
[10]द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ।

(१) 'युद्धादनवर्त्तिना कृतशपथानां भटानामेकम्। (२) चत्वारि धूले । [ 'गर्द'—'धूल' ] रेणु· स्त्रीपुंसयो', धूलिः स्त्रियां, पांशु पुंसि, रज सान्तं क्लीबे । पांसुरपि । (३) द्वे पिष्टस्य रजस, षडेव रजस इत्येके । (४) अतिव्याकुलस्य द्वे । (५) चत्वारि पताकाया· [ 'झण्डी' ] । (६) एक भयङ्करयुद्धभूमे । (७) एकमहम्पूर्विकाया ['मैं पहिले मैं पहिले' ऐसे उत्साह से युद्ध आदि क्रिया] । (८) आत्मसम्भावनाया एकम् । [ 'मैं भी कुछ हूँ ऐसा घमण्ड करना' ] । (९) परस्परमहङ्कारस्यैकम् । (१०) दश सामर्थ्यस्य । तत्र तर·सहसी सान्ते क्लीबे, स्थाम नान्तं क्लीबे । शक्ति स्त्रियाम् ।

शक्तिः पराक्रमः प्राणो [1]विक्रमस्त्वतिशक्तिता १०२
[2]वैरिपाणं तु यत्पानं वृत्ते भाविनि वा रणे ।
[3]युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ॥१०३॥
मृधमास्कन्दनं संख्यं समीकं साम्परायिकम् ।
अस्त्रियां समरानीकरणाः कलहविग्रहौ ॥१०४॥
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ।
अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः १०५
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ।
[4]नियुद्धं बाहुयुद्धेऽथ [5]तुमुलं रणसङ्कुले ॥१०६॥
[6]क्ष्वेडा तु सिंहनादः स्यात्[7]करिणां घटना घटा ।
[8]क्रन्दनं योधसंरावो [9]बृंहितं करिगर्जितम् ॥१०७॥

(१) द्वे अतिपराक्रमस्य । (२) युद्धावसरे आदावन्ते च मद्यादिपानस्य । (३) एकत्रिंशत्-[३१] युद्धस्य । समरानीकरणाः पुंनपुंसकयोः । संयत्समितौ—तान्ते स्त्रियाम् । युत्—धान्ता स्त्रियाम् । आजिसमिती—स्त्रियाम् । (४) द्वे बाहुयुद्धस्य [ 'कुश्ती' ] । (५) द्वे रणसङ्कुले [ घमासान युद्ध ] । ( ६ ) द्वे योधानां सिंहनादस्य । क्ष्वेडा स्त्रियाम् । ( ७ ) हस्तिसंघस्य द्वे । (८) अन्योन्यमाह्वानस्य [ललकारना] । (९) द्वे हस्तिगर्जनस्य ।

वि[1]स्फारो धनुषः स्वानः प[2]टहाडम्बरौ समौ ।
प्र[3]सभं तु बलात्कारो हठोऽथ [4]स्खलितं छलम् ॥१०८॥
[5]अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम् ।
[6]मूर्च्छा तु कश्मलं मोहोऽ[7]प्यवमर्दस्तु पीडनम् ॥१०९॥
[8]अभ्यवस्कन्दनं त्वभ्यासादनं [9]विजयो जयः ।
वै[10]रशुद्धिः प्रतीकारो वैरनिर्यातनञ्च सा ॥११०॥
[11]प्रद्रावोद्रावसन्द्रावसंदावा विद्रवो द्रवः ।
अपक्रमोऽपयानञ्च [12]रणे भङ्गः पराजयः ॥१११॥

---

(१) एक धनुष शब्दस्य । ['टङ्कार'] । (२) द्वे युद्धपटहस्य । ['दमदमा' 'मारू बाजा'] । (३) त्रीणि बलात्कारस्य । तत्र प्रसभ क्लीबे । (४) द्वे युद्धमर्यादाभङ्गस्य (५) त्रीणि शुभाशुभ सूचकोत्पातस्य । (६) त्रीणि मूर्च्छाया (७) द्वे सेनादिना शत्रुदेशादिपीडनस्य । [कष्ट देना] । (८) द्वे प्रहारादिना निःशक्तीकरणस्य—छलादाक्रमणस्य । (९) विजयस्य द्वे । (१०) त्रीणि वैरशोधनस्य ।[बदला लेना] । (११) अष्टौ पलायनस्य ['भागना'] । (१२) द्वे पराजयस्य ।

[1]पराजितपराभूतौ त्रिषु [2]नष्टतिरोहितौ ।
[3]प्रमापणं निबर्हणं निकारणं विशारणम् ॥११२॥
प्रवासनं परासनं निषूदनं निहिंसनम् ।
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ॥११३॥
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ।
निर्वापणं विशसनं मारणं प्रतिघातनम् ॥११४॥
उद्वासनप्रमथनक्रथनोज्जासनानि च ।
आलम्भपिञ्जविशरघातोन्माथवधा अपि ११५
[4]स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्
[5]परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ।
मृतप्रमीतौ त्रिष्वेते [6]चिता चित्या चितिः स्त्रियाम्

---

(१) द्वे पराजितस्य [ हारा हुआ ]। (२) द्वे तिरोहितस्य [ छिपा हुआ ]। (३) त्रिंशन्मारणस्य। [ मारना ]। अन्त्या. षट् पुंसि। शेषाणि क्लीबे। (४) दश मरणस्य। पञ्चता–स्त्रियाम्। मृत्युः स्त्रीपुंसयोः। निधन पुंनपुंसकयोः। (५) सप्त मृतस्य त्रिषु। (६) त्रीणि चितायाः।

[1]कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।
[2]श्मशानं स्यात्पितृवनं [3]कुणपः शवमस्त्रियाम् ११८
[4]प्रग्रहोपग्रहो बन्द्यां [5]कारा स्याद्बन्धनालये ।
[6]पुंसि भूम्न्यसवः प्राणाश्चैवं [7]जीवोऽसुधारणम् ॥
[8]आयुर्जीवितकालो ना [9]जीवातुर्जीवनौषधम् ।

❀ इति क्षत्रियवर्गः ❀

❀ अथ वैश्यवर्गः ❀

[10]ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।
[11]आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥

---

( १ ) छिन्नशिरसो देहस्यैकम् । कबन्धोऽस्त्रियाम् । ( २ ) द्वे श्मशानस्य । ( ३ ) द्वे शवस्य [ मुर्दा ] । शवमस्त्रियाम् ( ४ ) त्रीणि- बन्धा , बन्दी स्त्रियाम् । [ कैद कर लाई हुई स्त्री और बाल बच्चे ] । (५) द्वे बन्धनगृहस्य [ कैदखाना ] । (६) द्वे प्राणवायुनाम् । पुंसि बहुत्वे च प्राणासु- शब्दौ । (७) द्वे जीवनक्रियायाः । (८) जीवनकालस्य द्वे । आयुः सान्त क्लीबे । (९) मृतसञ्जीवनस्यौषधस्य द्वे ।

(१०) षड् वैश्यस्य नामानि । अन्त्यौ द्वौ शान्तौ । (११) षड् जीवनोपायस्य [जीविका] ।

स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः ।
सेवा श्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतम् ॥२॥
द्वे याचितायाचितयोर्यथासंख्यं मृतामृते ।
सत्यानृतं वणिग्भावः स्यादृणं पर्युदञ्चनम् ॥३॥
उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।
याच्ञयाऽऽप्तं याचितकं निमयादापमित्यकम् ॥४॥
उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।
कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ५

(१) कृष्यादि-वृत्तीनामेकैकम् । तत्र कृषिः—स्त्री । (२) द्वे सेवायाः ['नौकरी'-खुशामद'] । (३) द्वे कृपे. [ खेती ] । (४) क्षेत्रादिपतितधान्यानां कणश आदानम्-उञ्छः । क्षेत्रपतितमञ्जर्यादि संग्रहः—शिलम् । उञ्छः शिलश्च ऋतमित्यभिधीयते । (५) याचितस्यैकम् । अयाचितस्यैकम् । (६) द्वे वाणिज्यस्य । (७) त्रीणि ऋणस्य। (८) वृद्धये धनादिदानस्य त्रीणि । [ व्याज पर रुपये देना ] । (९) याच्ञाप्राप्तस्यैकम् । (१०) परिवर्तनेन प्राप्तस्यैकम् । [ बदले में प्राप्त ] । (११) ऋणव्यवहारे धनदाता उत्तमर्णः, ऋणग्राहकः—अधमर्णः [ 'महाजन'–'आसामी'–'कर्जदार' ] । ( १२ ) चत्वारि कुसीदोपजीविनः । ['सूदखोर'] ।

[1]क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः ।
[2]क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥६॥
[3]यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि यत् ।
[4]तिल्यं तैलीनवन्माषोमाणुभंगाद् द्विरूपता ॥७॥
[5]मौद्गीनकौद्रवीणादिशेषधान्योद्भवक्षमम् ।
[ [6]शाकक्षेत्रादिके शाकशाकटं शाकशाकिनम् । ]
[7]बीजाकृतं तूप्तकृष्टे [8]सीत्यं कृष्टं च हल्यवत् ॥८॥

---

( १ ) चत्वारि कृषीवलस्य [ 'किसान' ] । ( २ ) व्रीहिसामान्यस्य कलमादेश्चोत्पत्तियोग्यस्य क्षेत्रस्यैकैकम् । (३) यव–यवक–षष्टिकभवनक्षेत्रस्यैकम् । (४) तिलानां भवन क्षेत्र—तिल्यं तैलीनम् । माषाणां भवन—माष्यं, माषीणम् । उमानाम्—भवन क्षेत्रम्—उम्यम्, औमीनम्, अणूनाम्—अणव्यम्, आणवीनम् । भङ्गानां भवन क्षेत्र—भङ्ग्यं, भाङ्गीनम् ।

(५) व्रीह्याद्यतिरिक्तमुद्गादिशेषधान्योद्भवक्षेत्रे यथायथ—मौद्गीन, कौद्रवीणम्, गौधूमीनम् । कालायीनम्, कौलत्थीनम्, प्रैयङ्गवीन, चाणकीनमित्यादि बोध्यम् । (६) शाकक्षेत्रस्य द्वे । (७) बीजवापोत्तर कृष्टस्य द्वे । (८) त्रीणि कृष्टमात्रस्य ।

त्रि[1]गुणाकृतंतृतीयाकृतंत्रिहल्यंत्रिसीत्यमपितस्मिन्
द्वि[2]गुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह ॥ ९ ॥
द्रो[3]णाढकादिवापादौ द्रौणिकाढकिकादयः ।
[4]खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥१०॥
पुं[5]न्नपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु ।
कै[6]दारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे ॥११॥
लो[7]ष्टानि लोष्टवः पुंसि [8]कोटिशो लोष्टभेदनः ।
[9]प्राजनं तोदनं तोत्रं [10]खनित्रमवदारणे ॥ १२ ॥

---

(१) वारत्रय कृष्टस्य । (२) द्विवारं कृष्टस्य पच । (३) द्रोणादिपरिमितव्रीह्यादिवापयोग्यक्षेत्रस्यैकैकम् । प्रास्थिकः, कौडविकः, द्रौणिकः, आढकिक इत्यादि । (४) एक खारीवापस्य क्षेत्रस्य । [ मन भर अनाज वोने लायक खेत ] । उत्तमर्णादयः—खारीकान्ता. त्रिषु । (५) त्रीणि क्षेत्रस्य । वप्रः पुनपुसकयो. । ( ६ ) चत्वारि क्षेत्रसमूहस्य । ( ७ ) मृत्तिकाखण्डस्य द्वे । [ ढेला ] । ( ८ ) लोष्टभेदनकाष्ठस्य । ( ९ ) वृषादिप्रेरणदण्डस्य त्रीणि । [ 'चाबुक' ] । (१०) कुद्दालादेर्द्वे ।

[1]दात्रं लवित्रमा[2]बन्धो योत्रं योक्त्रमथो [3]फलम् ।
निरीशं कुटकं फालः कृषको [4]लांगलं हलम्॥१३॥
गोदारणं च सीरोऽथ [5]शम्या स्त्री युगकीलकः ।
[6]ईषा लांगलदण्डः स्यात्सी[7]ता लांगलपद्धतिः ॥१४
[8]पुंसि मेधिः खले दारु न्यस्तं यत्पशुबन्धने ।
[9]आशुर्व्रीहिः पाटलः स्या[10]च्छितशूकयवौ समौ ॥१५
[11]तोक्मस्तु तत्र हरिते [12]कलायस्तु सतीनकः ।
हरेणुखण्डिकौ चास्मिन् [13]कोरदूषस्तु कोद्रवः॥१६॥

---

(१) द्वे लवित्रस्य [ दाती ]। (२) द्वे आबन्धस्य । [ 'जोता' ]। (३) षट् फलस्य [ 'हलकी कुश' ]। कूटकं, निरीष, कृषिका, कुशिकेत्यपि नामान्तराणि । केचित्तु फलमित्यत्र 'हल'मिति पठित्वा निरीशादिद्वयं हलस्य, अन्त्यद्वयं फालस्येत्याहु । (४) चत्वारि हलस्य। (५) द्वे युगकीलकस्य ।

(६) द्वे हलयुगमध्यस्थस्य काष्ठदण्डस्य । (७) द्वे हलकृष्टरेखायाः, शीताऽपि । [ 'खुड्ड' । ] (८) धान्यखले पशुबन्धनस्तम्भस्यैकम् । [ 'मेंढ' ]। (९) त्रीणि आशुव्रीहे, आशु क्लीबपुंसो. । (१०) द्वे यवानाम् । (११) अपक्वयवस्यैकम् । (१२) चत्वारि कलायस्य [ मटर ]। (१३) द्वे कोद्रवस्य ।

[1]मंगल्यको मसूरोऽथ [2]मकुष्टकमयुष्टकौ ।
वनमुद्गे [3]सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥१७॥
[4]सिद्धार्थस्त्वेष धवलो [5]गोधूमः सुमनः समौ ।
[6]स्याद्यावकस्तु कुल्माष[7]श्चणको हरिमन्थकः॥१८॥
[8]द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले ।
[9]क्षवः क्षुताभिजननो राजिका कृष्णिकाऽऽसुरी१९
[10]स्त्रियौ कंगूप्रियंगू द्वे [11]अतसी स्यादुमा क्षुमा ।
[12]मातुलानी तु भंगायां [13]व्रीहिभेदस्त्वणुः पुमान्२०

---

(१) द्वे मसूरस्य। (२) वनमुद्गस्य त्रीणि । [ मोठ ]। (३) त्रीणि सर्षपस्य । [ सरसों ] । (४) गौरसर्षपस्यैकम् । (५) द्वे गोधूमस्य [ 'गेहूँ' ]। (६) द्वे अर्धस्विन्नयवादेः [ 'घुघरी' ]। (७) द्वे चणकस्य [ चणा ]। (८) द्वे तैलरहितनिष्फलतिलानाम् । (९) पञ्च राजिकायाः [ राई ]। (१०) द्वे प्रियङ्गोः [ कगुनी ] स्त्रियाम् । (११) त्रीणि अतस्याः। [ तीसी ]। (१२) द्वे भङ्गायाः। [ भांग ]। (१३) एकं व्रीहिविशेषस्य [ 'चीना' ]।

[1]किंशारुः सस्यशूकं [2]स्यात्कणिशं शस्यमञ्जरी ।
[3]धान्यं व्रीहिः स्तम्बकरिः [4]स्तम्बो गुच्छस्तृणादिनः २०
[5]नाडी नालं च काण्डोऽस्य [6]पलालोऽस्त्री सनिष्फल
[7]कडंगरो बुसं क्लीबे [8]धान्यत्वचि तुषः पुमान् ॥२२॥
[9]शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे [10]शमी शिम्बा त्रिपूत्तरे
[11]ऋद्धमावसितं धान्यं [12]पूतन्तु बहुलीकृतम् ॥२३॥

---

(१) द्वे यवाद्यग्रभागस्य । (२) द्वे धान्यमञ्जर्याः । (३) त्रीणि धान्यसामान्यस्य । व्रीहि—स्तम्बकरी पुंसि । तदुक्त—

"व्रीहिर्यवो मसूरो गोधूमो मुद्गमाषतिलचणकाः ।
अणव प्रियङ्गुकोद्रवमयुष्ठकाः शालिराढक्य ॥
किञ्च कलायकुलत्थौ शणश्च सप्तदश धान्यानि ।"

( ४ ) यवादिमूलस्य द्वे । ( ५ ) त्रीणि तृणादिकाण्डस्य [ 'डंठल'—'फरडा' 'कडबी' ] । (६) गृहीतधान्यस्य काण्डस्यैकम् [ पुआल ] । (७) द्वे बुसस्य [ 'भूसा' ] । ( ८ ) द्वे तुषस्य [ भूसी ] । ( ९ ) तीक्ष्णाग्रधान्यस्य द्वे । (१०) द्वे शिम्बा [ छीमी ] । (११) मर्दितस्यापनीततृणस्य धान्यराशेर्द्वे त्रिषु । (१२) अपनीततुषादेर्धान्यस्य द्वे, त्रिषु = वाच्यलिङ्गे ।

[1]माषादयः शमीधान्ये [2]शूकधान्ये यवादयः ।
[3]शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी॥२४॥
[4]तृणधान्यानि नीवाराः [5]स्त्री गवेधुर्गवेधुका ।
[6]अयोग्रं मुसलोऽस्त्री [7]स्यादुदूखलमुलूखलम् २५
[8]प्रस्फोटनं शूर्पमस्त्री [9]चालनी तितउः पुमान् ।
[10]स्यूतप्रसेवौ [11]कण्डोलपिटौ [12]कटकिलिञ्जकौ ॥२६॥
समानौ [13]रसवत्यां तु पाकस्थानमहानसे ।

---

(१) माषादयः शमीधान्यानि । तदुक्तं—"रत्नकोशे—

माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः ।
कलायस्तुवर इति शमीधान्यगणः स्मृतः ॥" इति ।

(२) यवगोधूमादयः शूकधान्यानि ।

(३) कलमादयः शालिपदवाच्याः । माषाद्याः शाल्यन्ताः पुंसि । (४) द्वे तृणधान्यानाम् । (५) द्वे गवेधुकायाः । [ मुन्यन्नविशेषस्य ] । (६) द्वे मुसलस्य । (७) द्वे उलूखलस्य । (८) द्वे शूर्पस्य । (९) द्वे चालन्याः । (१०) द्वे प्रसेवस्य ['थैला'—'बोरी'] । (११) वंशादिनिर्मितस्य द्वे [ 'दौरी'—'डलिया' ] । (१२) द्वे कटस्य [ चटाई ] । (१३) त्रीणि रसवत्याः [रसोईघर]

[1]पौरोगवस्तदध्यक्षः [2]सूपकारास्तु बल्लवाः ॥२७॥
आरालिका आन्धसिकाः सूदा औदनिका गुणाः
[3]आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥२८॥
[4]अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।
[5]अङ्गारधानिकाऽङ्गारशकट्यपि हसन्त्यपि ॥२९॥
हसन्यप्यथ न स्त्री [6]स्यादङ्गारोऽलातमुल्मुकम् ।
[7]क्लीबेऽम्बरीषं भ्राष्ट्रो ना [8]कन्दुर्वा स्वेदनी स्त्रियाम् ॥३०॥
[9]अलिञ्जरः स्यान्मणिकः [10]कर्कर्यालुर्गलन्तिका ।

---

(१) महानसाध्यक्षस्य द्वे । (२) सप्त पाककर्तुः [रसोइया] । आद्यद्वयं व्यञ्जनकर्तुरित्यन्ये । (३) त्रीणि कान्दविकस्य । [ 'हलवाई'—'कन्दोई' ] पौरोगवाद्यास्त्रिषु । (४) पञ्च चुल्ल्याः । [ चूल्हा ] । (५) चत्वारि हसन्त्याः [ 'सिगड़ी'—'बोरसी' ] । ( ६ ) त्रीणि अङ्गारस्य । केचित्तु—अस्यद्वयमर्धदग्धकाष्ठस्येत्याहुः । अङ्गारः पुंनपुंसकयोः । ( ७ ) द्वे भ्राष्ट्रस्य । [ 'भाड़' ] । (८) द्वे लोहपात्रविशेषस्य [कड़ाही] । कन्दुः स्त्रीपुंसयोः, स्वेदनी स्त्रियां, पुंसि च स्वेदनः । (९) द्वे महाघटस्य [ 'मूंण'—'माट' 'कमोरा' ] । (१०) त्रीणि कर्कर्याः [ 'करवो'—तृतियो 'करो' ] ।

पिठरः[1] स्थाल्युखा कुण्डं कलशस्तु[2] त्रिषु द्वयोः ३१
घटः कुटनिपावस्त्री शरावो[3] वर्धमानकः ।
ऋजीषं[4] पिष्टपचनं कंसोऽस्त्री[5] पानभाजनम् ॥३२॥
कुतूः[6] कृत्तेः स्नेहपात्रं सैवाल्पा[7] कुतुपः पुमान् ।
सर्वमावपनं[8] भाण्डं पात्रामत्रं च भाजनम् ॥३३॥
दर्विः[9] कम्बिः खजाका च स्यात्तर्दू[10]र्दारुहस्तकः ।
अस्त्री[11] शाकं हरितकं शिग्रुरस्य तु नाडिका[12] ॥३४॥
कलम्बश्च कडम्बश्च वेसवार[13] उपस्करः ।

---

(१) चत्वारि स्थाल्या. [बटलोही]। (२) चत्वारि घटस्य । कलशस्त्रिषु, शेषाः स्त्रीपुंसयो । (३) द्वे शरावस्य पुनपुंसकयो. । [ 'सराई'–'परई' ]। (४) द्वे ऋजीषस्य । [ 'तवा' ]। (५) द्वे कंसस्य [ 'कटोरा'–'कचोला' ]। (६) द्वे तैलादिपात्रस्य, कुतू: स्त्रियाम् । [ कुप्पा ]। (७) एकं कुतुपस्य [ कुप्पी ]। (८) पञ्च भाण्डस्य [ 'वर्त्तन'–'वासन' आदि ]। (९) त्रीणि दर्व्याः स्त्रियाम् । [ 'करछुल'–'कडछी' ]। (१०) द्वे दर्विविशेषस्य [ 'चाटू'–'पलटो' ]। (११) त्रीणि शाकस्य । शाकमखी। (१२) त्रीणि शाकनालस्य [ 'टठल' ]। (१३) द्वे वेसवारस्य।

तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥३५॥
मरिचं कोलकं कृष्णमूषणं धर्मपत्तनम् ।
जीरको जरणोऽजाजी कणा कृष्णा तु जीरके ३६
सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ।
आर्द्रकं शृङ्गवेरं स्यादथच्छत्रा वितुन्नकम् ॥३७॥
कुस्तुम्बुरु च धान्याकमथ शुण्ठी महौषधम् ।
स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥३८॥
आरनालकसौवीरकुल्माषाभिषुतानि च ।
अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥३९॥

---

"चित्रक पिप्पलीमूल पिप्पली चव्यनागरम् ।
धान्याकं रजनीश्वेततण्डुलाश्च समांशका ॥
वेसवार इति ख्यात शाकादिषु नियोजयेत् ।"

( १ ) त्रीणि तिन्तिडीकस्य । [ 'चूक' ] । ( २ ) षट् मरिचस्य । (३) चत्वारि जीरकस्य । (४) षट् कृष्णजीरकस्य । (५) द्वे आर्द्रकस्य । [ 'आदी' ] । (६) चत्वारि धान्याकस्य । [ धनियाँ ] । (७) पञ्च शुण्ठ्या । [ सोंठ ] । विश्वं स्त्रीनपुंसकयो । (८) अष्टौ काञ्जिकस्य ।

सहस्रवेधि[1] जतुकं वाह्लीकं हिङ्गु रामठम् ।
तत्पत्री[2] कारवी पृथ्वी वाष्पिका कचरी पृथुः४०
निशाख्या[3] काञ्चनी पीता हरिद्रा वरवर्णिनी ।
सामुद्रं[4] यत्तु लवणमक्षीवं वशिरं च तत् ॥४०॥
सैन्धवोऽस्त्री[5] शीतशिवं माणिमन्थं च सिन्धुजे ।
रौमकं[6] वसुकं पाक्यं[7] विडञ्च कृतके द्वयम् ॥४२॥
सौवर्चलेऽक्षरुचके[8] तिलकं[9] तत्र मेचके ।
मत्स्यण्डी[10] फाणितं खण्डविकारः[11] शर्करा सिता४३
कूर्चिका[12] क्षीरविकृतिः स्याद्रसाला[13] तु मार्जिता ।

(१) पञ्च हिङ्गुनः [ 'हींग' ] । (२) पञ्च हिङ्गुपत्र्या. । त्वक्पत्रीति पाठः क्वचित् । ( ३ ) पञ्च हरिद्राया. [ 'हल्दी' ] । (४) द्वे सामुद्रलवणस्य । (५) चत्वारि सैन्धवलवणस्य । (६) द्वे शाकम्भरीलवणस्य । [ सांभर निमक ] । (७) द्वे कृतकलवणस्य । [ खारी नोन ] । (८) त्रीणि सौवर्चलस्य [ सोंचर निमक ] । ( ९ ) कृष्णवर्णस्य सौवर्चलस्यैकम् । (१०) त्रीणि फाणितस्य । ['चीनी की राव'] । (११) द्वे शर्कराया. [मिश्री] । (१) द्वे किलाटिकाया ['खोवा'–'मांवा'] । (१) द्वे मार्जिनायाः [शिखरण] ।

[ दध्ना सह पयः पक्वं यत्तत्स्याद्दधिकूर्चिका ।
तक्रेण पक्वं यत्क्षीरं सा भवेत्तक्रकूर्चिका ॥ ]
[1]स्यात्तेमनन्तु निष्ठानं त्रिलिङ्गा वासितावधेः ॥४४॥
[2]शूलाकृतं भटित्रं स्याच्छूल्य[3]मुख्यन्तु पैठरम् ।
[4]प्रणीतमुपसंपन्नं [5]प्रयस्तं स्यात्सुसंस्कृतम् ॥४५॥
[6]स्यात्पिच्छिलं तु विजिलं [7]संमृष्टं शोधितं समे ।
[8]चिक्कणं मसृणं स्निग्धं तुल्ये [9]भावितवासिते ॥४६॥
[10]आपक्वं पौलिरभ्यूषो [11]लाजाः पुम्भूम्नि चाक्षताः

---

(१) द्वे व्यञ्जनस्य । वासितशब्दपर्यन्तं वाच्यलिङ्गाः । (२) लोहशलाकया पक्वस्य मांसस्य त्रीणि । (३) स्थालीपक्वस्यौदनादेर्द्वे । (४) संस्कृतस्य व्यञ्जनादेर्द्वे । [ बढिया बनाया हुआ ] । (५) द्वे द्रव्यान्तरसंस्कृतस्य । [ छौंक दिया हुआ ] । (६) जलाविल व्यञ्जनादेर्द्वयम् । [ झोलदार ] । (७) शोधितस्यान्नादेर्द्वे । [ साफ किया हुआ ] । (८) त्रीणि चिक्कणस्य । (९) वासितस्य द्वे [ 'सुगन्धित किया हुआ' ] । (१०) ईषत्पक्वर्जितयवादेस्त्रीणि । [ 'सिके हुए सिट्टा आदि' ] । (११) भृष्टव्रीह्यादेर्द्वयम् । पुंसि बहुत्वेऽक्षताः । [ लावा ] । केचित्तु—अखण्डिततण्डुलस्य द्वे इत्याहुः । [ अक्षत ] ।

[1]पृथुकः स्याच्चिपिटको [2]धाना भृष्टयवे स्त्रियः ४७
[3]पूपोऽपूपः पिष्टकः स्यात्[4]करम्भो दधिसक्तवः ।
[5]भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः
[6]भिस्सटा दग्धिका [7]सर्वरसाग्रे मण्डमस्त्रियाम् ।
[8]मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥४९॥
[9]यवागूरुष्णिका श्राणा विलेपी तरला च सा ।
[[10]म्रक्षणाभ्यञ्जने तैलं [11]कृसरस्तु तिलौदनः ।]
[12]गव्यं त्रिषु गवां सर्वं [13]गोविड् गोमयमस्त्रियाम् ५०

---

( १ ) द्वे पृथुकस्य [ चिउडा ] । ( २ ) द्वे भर्जितयवानां [ धाणी ] । ( ३ ) त्रीणि अपूपस्य । [ पूडा ] । ( ४ ) द्वे दधिमिश्रितसक्तुन. ।
(५) षट् भक्तस्य, अन्ध सान्तं क्लीबे । ओदनदीदिवी अस्त्रियाम् । [भात] । ( ६ ) दग्धान्नस्य द्वे । ( ७ ) द्वे सर्वद्रवस्य मण्डस्य [ 'रसा' ] ।
(८) भक्तमण्डस्य त्रीणि । [भांत का मांड] । (९) पञ्च यवाग्वा, [लपसी] । ( १० ) त्रीणि तैलस्य । (११) तिलौदनस्य द्वे । ( १२ ) गोरसस्यैकम् । ( १३ ) द्वे गोमयस्य [ 'गोबर' ] गोविट् षान्ता स्त्रियाम् । गोमयमस्त्रियाम् ।

[1]तत्तु शुष्कं करीषोऽस्त्री [2]दुग्धं क्षीरं पयः समम्।
[3]पयस्यमाज्यदध्यादि [4]द्रप्सं दधि घनेतरत् ॥५१॥
[5]घृतमाज्यं हविः सर्पि[6]र्नवनीतं नवोद्धृतम्।
[7]तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम् ॥५२॥
[8]दण्डाहतं कालशेयमरिष्टमपि गोरसः।
[9]तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ५३
[10]मण्डं दधिभवं मस्तु [11]पीयूषोऽभिनवं पयः।

---

(१) एकं शुष्कगोमयस्य [ 'करस' 'छाणा' ]। (२) त्रीणि दुग्धस्य। पय सान्त क्लीबे। (३) एक घृतदध्यादे। (४) शिथिलस्य दध्न एकम्। 'सर'मित्यपि नाम। (५) चत्वारि घृतस्य, हवि.सर्पिषी क्लीबे। (६) एक नवनीतस्य [ 'मक्खन' ]। (७) एकं हैयङ्गवीनस्य घृतस्य [ 'नौनी घी', 'चूँटियो घी' ]। (८) चत्वारि सामान्यघोलस्य [ 'मठा' 'छाछ' ]। (९) चतुर्थांशजलं—तक्रम्, अर्धजलम्—उदश्वित्—क्लीबे। निर्जल—मथित [ मठा ] (१०) वस्त्रनिस्सारितदधिजलस्यैकम्। [ 'दही का तोड़'] (११) नवप्रसूताया गोर्दुग्धे।

अशनाया[1] बुभुक्षा क्षुद् ग्रासस्तु[2] कवलः पुमान् ॥
सपीतिः[3] स्त्री तुल्यपानं सग्धिः[4] स्त्री सहभोजनम्
उदन्या[5] तु पिपासा तृट् तर्षो जग्धिस्तु[6] भोजनम् ॥
जेमनं लेह आहारो निघासो न्याद इत्यपि ।
सौहित्यं[7] तर्पणं तृप्तिः फेला[8] भुक्तसमुज्झितम् ॥५६
कामं[9] प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।
गोपे गोपाल[10]गोसंख्यगोधुगाभीरवल्लवाः ॥५७॥
गोमहिष्यादिकं[11] पादबन्धनं द्वौ[12] गवीश्वरे ।
गोमान् गोमी गोकुलन्तु[13] गोधनं स्याद्गवां व्रजे ॥

---

(१) त्रीणि क्षुधायाः, क्षुत् धान्ता स्त्रियाम्। (२) द्वे ग्रासस्य। (३) द्वे बहुभिर्मिलित्वा पानस्य। (४) सहभोजनस्य द्वे। (५) चत्वारि पिपासायाः। तृट् षान्ता स्त्रियाम्। (६) सप्त भोजनस्य। (७) त्रीणि तृप्तेः। (८) द्वे भुक्तसमुज्झितस्य [ 'जूठ' ]। (९) षट् यथेप्सितस्य [ 'मन माफिक' ]। (१०) षट् गोपालस्य [ ग्वाला ]। (११) गोमहिष्यादेरेकम्। यादवं धनमिति प्राचीनो मनोहरश्च पाठः। (१२) त्रीणि गोस्वामिनः। (१३) द्वे गोसमूहस्य।

[१]त्र्याशितङ्गवीनं तद्भावो यत्राशिताः पुरा ।
[२]उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः ॥५९॥
अनड्वान् सौरभेयो गौ[३]रुक्ष्णां संहतिरौक्षकम् ।
[४]गव्या गोत्रा गवां [५]वत्सधेन्वोर्वात्सकधैनुके ॥६०
[६]वृषो महान् महोक्षः [७]स्याद्वृद्धोक्षस्तु जरद्गवः ।
[८]उत्पन्न उक्षा जातोक्षः [९]सद्यो जातस्तु तर्णकः॥६१
[१०]शकृत्करिस्तु वत्सः स्याद्[११]दम्यवत्सतरौ समौ ।
[१२]आर्षभ्यः षण्डतायोग्यः [१३]षण्डो गोपतिरिट्चरः॥६२
[१४]स्कन्धदेशे त्वस्य वहः [१५]सास्ना तु गलकम्बलः ।

---

(१) भूतपूर्वगोचरभूमेरेकम् । (२) नव वृषभस्य । उक्षा नान्तः, अनड्वान् हान्तः । (३) एक वृषसङ्घस्य । (४) गोसङ्घस्य द्वे । (५) वत्स धेनुसमूहस्यैकैकम् । (६) महोक्षस्यैकम् । (७) वृद्धवृषभस्य द्वे ।

(८) यूनो वृषभस्यैकम् । (९) एक सद्योजातस्य वत्सस्य । (१०) द्वे वत्सस्य [ बछडा ] । (११) बाल्ययुवावस्थयोर्मध्ये वर्तमानस्य द्वे । (१२) एकं तारुण्यं प्राप्तस्य वत्सस्य । (१३) त्रीणि षण्ढस्य । [ सांड ] । (१४) वृषभस्कन्धदेशस्यैकम् । (१५) द्वे गलकम्बलस्य । सास्ना स्त्रियाम् ।

[1]स्यान्नस्तितस्तु नस्योतः [2]प्रष्ठवाड् युगपार्श्वगः॥६३
[3]युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः।
[4]खनति तेन तद्वोढाऽस्येदं हालिकसैरिकौ॥६४॥
[5]धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः।
[6]उभावेकधुरीणैकधुरावेकधुरावहे॥६५॥
स तु [7]सर्वधुरीणः स्याद्यो वै सर्वधुरावहः।
[8]माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ६६
अर्जुन्यघ्न्या रोहिणी स्यात् [9]उत्तमा गोषु नैचिकी।
[10]वर्णादिभेदात्संज्ञाः स्युः शबली धवलादयः ६७

---

(१) द्वे नामारज्जुयुक्तस्य। (२) दमनकाले स्कन्धारोपितयुगकाष्ठस्य द्वे। (३) युगं वहति—युग्यः, प्रासङ्गं वहति—प्रासङ्ग्य, शकटं वहति—शाकटः। (४) हलेन खनति—हालिकः, हलं वहति—हालिकः, हलस्यायं—हालिकः। एवं सीरेण खनति, सीरं वहति, सीरस्यायं वा—सैरिकः। (५) पञ्च धुरन्धरस्य वृषभस्य। (६) त्रीणि एकधुरावहस्य। (७) द्वे सर्वधुरावहस्य। (८) नव गोः। [ गाय ] (९) एकं श्रेष्ठाया गोः। (१०) वर्णादिभेदात्—कपिला, धवला, धवली, शबलेत्यादीनि नामानि।

[1]द्विहायनी द्विवर्षा गौरे[2]काब्दा त्वेकहायनी ।
[3]चतुरब्दा चतुर्हायण्येवं [4]त्र्यब्दा त्रिहायणी ॥६८॥
[5]वशा वन्ध्याऽव[6]तोका तु स्रवद्गर्भाऽथ [7]सन्धिनी ।
आक्रान्ता वृषभेणाथ [8]वेहद्गर्भोपघातिनी ॥६९॥
[9]काल्योपसर्या प्रजने [10]प्रष्ठौही बालगर्भिणी ।
[11]स्यादचण्डी तु सुकरा [12]बहुसूतिः परेष्टुका ॥७०॥
[13]चिरप्रसूता बष्कयणी [14]धेनुः स्यान्नवसूतिका ।
[15]सुव्रता सुखसन्दोह्या [16]पीनोध्नी पीवरस्तनी ॥७१॥
[17]द्रोणक्षीरा द्रोणदुग्धा [18]धेनुष्या बन्धके स्थिता ।

(१) द्वे द्विवर्षाया गो । ( २ ) एकवर्षाया द्वे । (३) द्वे चतुर्वर्षायाः । ( ४ ) द्वे त्रिवर्षाया । ( ५ ) द्वे वन्ध्याया । ( ६ ) द्वे स्रवद्गर्भाया. । ( ७ ) वृषभाक्रान्ताया गोरेकम् । ( ८ ) गर्भघातिन्या द्वे । ( ९ ) गर्भग्रहणयोग्याया एकम् । ( १० ) बालगर्भिण्या द्वे ।

( ११ ) सुशीलाया द्वे [ 'सूधी' ] ( १२ ) द्वे बहुप्रसूताया. । ( १३ ) चिरप्रसूताया द्वे [ 'वैडकी' ] । ( १४ ) द्वे नूतनप्रसूतायाः । (१५) द्वे सुखदोह्याया गो । (१६) द्वे पीवरस्तन्या । (१७) द्रोणदुग्धाया द्वे [ १० सेर दूधवाली ] । ( १८ ) एक बन्धके स्थिताया गो, ।

[1]समांसमीना सा यैव प्रतिवर्षं प्रसूयते ॥७२॥
[2]ऊधस्तु क्लीबमापीनं [3]समौ शिवककीलकौ ।
[4]न पुंसि दाम सन्दानं [5]पशुरज्जुस्तु दामनी ॥७३॥
[6]वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।
[7]कुठरो दण्डविष्कम्भो [8]मन्थनी गर्गरी समे ॥७४॥
[9]उष्ट्रे क्रमेलकमयमहाङ्गाः [10]करभः शिशुः ।
[11]करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः॥७५॥
[12]अजा छागी [13]शुभच्छागबस्तच्छगलका अजे ।
मेढ्रो[14]रभ्रोरणोर्णायुमेषवृष्णय एडके ॥७६॥

---

(१) प्रतिवर्षं प्रसवित्र्या गोरेकम् । (२) द्वे दुग्धाशयस्य ['ऊडो'] । (३) द्वे कीलकस्य [खूँटा] । (४) दोहनकाले पादबन्धनरज्जोः [ न्याणां ] । (५) द्वे पशुबन्धनरज्ज्वाः । (६) पञ्च मन्थनदण्डनस्य [ 'भेरणो' ] । (७) मन्थनदण्डधारककाष्ठस्य सूत्रस्य वा । (८) द्वे मन्थनपात्रस्य [ 'विलोवणी' 'गगरी' ] । (९) चत्वारि उष्ट्रस्य । (१०) एकमुष्ट्र-शिशो. [ टोरडो ] । (११) दारुयन्त्रशृङ्खलादिबद्धस्य करभस्य । (१२) द्वे अजायाः [ बकरी ] । (१३) पञ्चानस्य । (१४) सप्त मेषस्य [ मींडा 'भेड' ] ।

[1]उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।
[2]चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः ॥७७॥
[3]वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥७८॥
[4]विक्रेता स्याद्विक्रयिकः [5]क्रायकः क्रयिकः समौ ।
[6]वाणिज्यं तु वणिज्या स्यान्[7]मूल्यं वस्नोऽप्यवक्रयः ॥
[8]नीवी परिपणो मूलधनं [9]लाभोऽधिकं फलम् ।
[10]परिदानं परीवर्तो नैमेयनिमयावपि ॥८०॥
[11]पुमानुपनिधिर्न्यासः [12]प्रतिदानं तदर्पणम् ।

---

( १ ) उष्ट्रादिवृन्दस्यैकैकम् । ( २ ) पञ्च गर्दभस्य । चक्रीवान् तान्त । ( ३ ) वणिजोऽष्टौ [ बिगजारा ] । ( ४ ) विक्रेतुर्द्वे [ बेचने वाला ] । ( ५ ) द्वे क्रयिकस्य [ खरीददार ] । ( ६ ) द्वे वाणिज्यस्य [ वणिज व्योपार ] ( ७ ) त्रीणि मूल्यस्य । (८) त्रीणि मूलधनस्य ['रकम'-'मूलधन'] (९) त्रीणि लाभस्य । ( १० ) चत्वारि परिवर्तनस्य । ['अदला बदला' ] । (११) द्वे निक्षेपस्य । [ धरोहर ] । (१२) निक्षेपार्पणस्य द्वे [ धन धरोहर वापिस देना ] ।

क्रये[1] प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥८१॥
विक्रेयं[3] पणितव्यञ्च पण्यं क्रय्यादयस्त्रिषु ।
क्लीबे[4] सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम् ॥
विपणो[5] विक्रयः संख्याः[6] संख्येये ह्यादश त्रिषु ।
विंशत्याद्याः[7] सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥
संख्यार्थे[8] द्विबहुत्वे स्तस्तासु[9] चानवतेः स्त्रियः ।

---

( १ ) आपणे बहिः स्थापितस्यैकम् । ( २ ) क्रयणयोग्यस्यान्तः स्थितस्य । ( ३ ) विक्रेयवस्तुनस्त्रीणि । क्रय्यादयः पण्यान्ताः त्रिषु । ( ४ ) त्रीणि सत्यापनस्य । [ 'बयाना'– साई' ।

(५) विक्रयकर्मणः द्वे [ बेचना ] । (६) एकादिका दशान्ता [ अष्टादशान्ता ] संख्या–संख्येये एव–त्रिषु लिङ्गेषु। एका शाटी, एको घट., एक कुलमिति । दश पुष्पा., दश स्त्रिय , अष्टादश कुलानि चेति । दशशब्दश्रवणपर्यन्तमष्टादश· शब्द यावत्—एकादिका संख्या संख्येये = द्रव्ये वर्तन्ते। तेन सामानाधिकरण्येनैव प्रयोग.—एक. घट., एका शाटीति, न तु भवति घटानां त्रिंशतिरितिवत् घटस्यैक इति । (७) विंशतिशब्दमारभ्य या. संख्यास्ता. संख्येये संख्यायाश्च वर्तन्ते, एकवचनान्ताश्च । यथा—विंशतिर्घटा', घटाना विंशतिरिति ।

(८) विंशत्यादिशब्दानां यदा संख्या अर्थस्तदा द्विवचनबहुवचने अपि भवतः, यथा द्वे विंशती, तिस्रो विंशतय इति । (९) तासु = विंशत्यादिषु नवतिमभि·

[1]पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥८४॥
[2]यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।
[3]मानं तुलाऽङ्गुलिप्रस्थैर्[4]गुञ्जाः पञ्चाद्यमाषकः ॥८५॥
ते [5]षोडशाक्षः कर्षोऽस्त्री [6]पलं कर्षचतुष्टयम् ।
[7]सुवर्णबिस्तौ हेम्नोऽक्षे [8]कुरुबिस्तस्तु तत्पले ॥८६॥
[9]तुला स्त्रियां पलशतं [10]भारः स्याद्विंशतिस्तुलाः ।
[11]आचितो दश भाराः स्युः [12]शाकटो भार आचितः ॥

---

व्याप्य स्त्रीलिङ्गा, यथा विंशतिर्वस्त्राणि, विंशतिः स्त्रिय इति ।

(१) दशानां पङ्क्तिरिति नाम, ततो दशगुणोत्तरं—शतम्, ततो दशगुणोत्तर सहस्रमित्यादि। (२) चत्वारि मानार्थकानि । (३) तुलया, अङ्गुल्यादिभि, प्रस्थैः = सेटकादिमितपात्रादिभिश्च—मानं भवति। (४) पञ्च गुञ्जा —आद्यः = शास्त्रीय, माषकः[५ रत्ती = मासा] । (५) षोडश माषकाः—कर्ष, [ १६ मासा = ८० रत्ती = १ तोला ] ( ६ ) कर्षचतुष्टयं–पलम् । [४ तोला का = १ पल शास्त्रीय । लौकिक, ३ भरी ४ मासा] (७ ) सुवर्णकर्षस्य नामद्वयम् । ( ८ ) सुवर्णपलस्यैकम् । ( ९ ) पलशत–तुला [ ४०० तोला = ५ सेर = ९६ रत्ती के तोले से ४ सेर १२। छटाँक–तुला । ] (१०) एक भारस्य [ २॥ मन, बोरी ] । (११) आचितस्यैकम् [ २५ मन = १० बोरी ] (१२) शाकटो भार आचित–उच्यते [ बैलगाड़ी का बोझा = २५ मन ]

[१]कार्षापणः कार्षिकः [२]स्यात्कार्षिके ताम्रिके पणः।
[३]अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः॥८८
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्।
[४]पादस्तुरीयो भागः स्यादं[५]शभागौ तु वण्टके॥८९॥
[६]द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु।
हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि॥९०॥
[७]स्यात्कोषश्च हिरण्यं च हेमरूप्ये कृताकृते।
[८]ताभ्यां यदन्यत्तत्कुप्यं [९]रूप्यं तद्द्वयमाहतम्॥९१

(१) कर्षमितरजतरूप्यस्य द्वे [ १ भरी चाँदी का सिक्का = १ रुपया ] (२) कर्षमितताम्रनिर्मितमुद्राया एकम् [ १ भरी ताँबेका सिक्का = १ पैसा पुराना ] (३) एकैकं प्रस्थादिप्रमाणानाम्। तदुक्त—"पलं प्रकुञ्चकं मुष्टि:, कुडवस्तच्चतुष्टयम्। चत्वारः कुडवाः प्रस्थः चतुःप्रस्थमथाढकम्॥" इत्यादि। (४) एकं चतुर्थभागस्य। (५) त्रीणि विभागस्य [ हिस्सा ] (६) त्रयोदश धनस्य। (७) घटिताघटितस्वर्णरूप्ययोर्द्वे। (८) हेमरूप्याभ्यामन्यस्य ताम्रादेर्धातोरेकम्। (९) आहतहेमरूप्यादेरेकम् [ 'रुपया' 'मोहर' ]।

¹गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ।
²शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् ॥९२
³मुक्ताऽथ विद्रुमः⁴ पुंसि प्रवालं पुन्नपुंसकम् ।
⁵रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥९३॥
⁶स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ।
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥९४॥
चामीकरं जातरूपं महारजतकाञ्चने ।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥९५
⁷अलङ्कारसुवर्णं यच्छृङ्गीकनकमित्यदः ।
⁸दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥९६॥
⁹रीतिः स्त्रियामारकूटो न स्त्रियामथ ¹⁰ताम्रकम् ।

---

( १ ) चत्वारि मरकतस्य [ पन्ना ] । ( २ ) त्रीणि पद्मरागस्य [ 'माणिक' ] ( ३ ) द्वे मौक्तिकस्य । ( ४ ) द्वे प्रवालस्य [ मूँगा ] । (५) द्वे रत्नस्य । मणि: स्त्रीपुंसयो । ( ६ ) एकोनविंशति सुवर्णस्य । हेमभर्मणी नान्ते क्लीबे । ( ७ ) एकमलङ्कारसुवर्णस्य । ( ८ ) पञ्च रजतस्य [ चाँदी ] । ( ९ ) द्वे पित्तलस्य [ पीतल ] ( १० ) षट् ताम्रस्य ।

शुल्वं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥९७

[1]लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी।

अश्मसारोऽथ [2]मण्डूरं सिंहाणमपि तन्मले ॥९८॥

[3]सर्वञ्च तैजसं लौहं [4]विकारस्त्वयसः कुशी।

[ सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु।

शीसं कालायसञ्चैवमष्टौ लोहानि चक्षते ॥ ]

[5]क्षारः काचोऽथ [6]चपलो रसः सूतश्च पारदे ॥९९॥

[7]गवलं माहिषं शृङ्गमभ्रकं गिरिजामले।

[9]स्रोतोञ्जन्तु सौवीरं कापोताञ्जनयामुने ॥१००॥

[10]तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके।

---

(१) सप्त लोहस्य। अय सान्तं क्लीबे (२) द्वे लोहकिट्टस्य। (३) एकं सर्वधातूनाम्। (४) लोहविकारस्यैकम्। [कुशा] (५) द्वे काचस्य। (६) चत्वारि पारदस्य। (७) एकं महिषशृङ्गस्य। [पूर्वं महिषशृङ्ग एव सूत स्थाप्यते स्म, अतोऽत्रास्य निर्देशः.]। (८) त्रीणि अभ्रकस्य। गिरिजाऽमले क्लीबे। (९) चत्वारि सौवीराञ्जनस्य [ 'सुर्मा' ]। (१०) चत्वारि तुत्थाञ्जनस्य [ तूतिया ]।

[1]कर्परी दार्विकाक्काथोद्भवं तुत्थं रसाञ्जनम्॥१०१॥
रसगर्भं[2] तार्क्ष्यशैलं [3]गन्धाश्मनि तु गन्धकः।
सौगन्धिकश्च [4]चक्षुष्याकुलाल्यौ च कुलत्थिका॥
[5]रीतिपुष्पं पुष्पकेतु पुष्पकं कुसुमाञ्जनम्।
[6]पिञ्जरं पीतनं तालमालं च हरितालके॥१०३॥
[7]गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु।
[8]बोलगन्धरसप्राणपिण्डगोपरसाः समाः॥१०४॥
[9]हिण्डीरोऽब्धिकफः फेनः [10]सिन्दूरं नागसम्भवम्।
[11]नागसीसकयोगेष्टवप्राणि [12]त्रपु पिच्चटम्॥१०५॥

(१) रसाञ्जनभेदस्य त्रीणि [ खपरिया ]। (२) त्रीणि रसाञ्जनस्य रसौंत ] स्वामी तु—तुत्थाञ्जनादि पञ्च पर्यायानुक्त्वा दार्विकाक्काथोद्भवादि-तार्क्ष्यशैलान्तं पृथक् रसाञ्जनपर्यायतया ब्रूते। (३) गन्धकस्य त्रीणि।

(४) तुत्थविशेषस्य त्रीणि। (५) चत्वारि रीतिपुष्पस्य [ मली' ]। (६) पञ्च हरितालस्य। (७) पञ्च शिलाजतुन। (८) षड् गन्धरसस्य [ बोल ]। (९) त्रीणि समुद्रफेनस्य। (१०) द्वे सिन्दूरस्य। (११) चत्वारि सीसकस्य [ सीसा ] (१२) चत्वारि वङ्गस्य [ राँगा ]

रङ्गवङ्गे अथ [1]पिचुस्तूलोऽथ [2]कमलोत्तरम् ।
स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ॥१०६
[3]मेषकम्बल ऊर्णायुः शशोर्णं [4]शशलोमनि ।
[5]मधु क्षौद्रं माक्षिकादि [6]मधूच्छिष्टं तु सिक्थकम् ॥
[7]मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नैपाली कुनटी गोला [8]यवक्षारो यवाग्रजः ॥१०८
पाक्योऽथ सर्जिकाक्षारः कापोतः [9]सुखवर्चकः ।
सौवर्चलं स्याद्रुचकं [10]त्वक्क्षीरी वंशरोचना ॥१०९
[11]शिग्रुजं श्वेतमरिचं [12]मोरटं मूलमैक्षवम् ।
[13]ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥११०॥

---

(१) द्वे कार्पासस्य [ रुई ]। (२) कुसुम्भस्य चत्वारि [कसुम्भा]। (३) द्वे कम्बलस्य। (४) शशलोमकम्बलस्य [ पशमीना ] शशलोम्नां वा। (५) त्रीणि मधुन। (६) द्वे मधूच्छिष्टस्य [ मोम ]। ( ७ ) सप्त मनःशिलायाः [ मैनशिल ] ( ८ ) त्रीणि यवक्षारस्य [ जवाखार ]। (९) पञ्च रुचकस्य [ सज्जीखार ] ( १० ) द्वे वंशलोचनस्य। (११) द्वे शोभाञ्जनबीजस्य। (१२) इक्षुमूलस्यैकम्। (१३) त्रीणि पिप्पलीमूलस्य [ पिपरामूल ]

गोलोमी [1]भूतकेशो ना [2]पत्राङ्गं रक्तचन्दनम् ।
त्रि[3]कटु त्र्यूषणं व्योषं त्रि[4]फला तु फलत्रिकम् ॥

ॐ इति वैश्यवर्गः ॥९॥



## ॐ अथ शूद्रवर्गः १० ॐ

[5]शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।
[6]आ चाण्डालात्तु सङ्कीर्णा अम्बष्ठकरणादयः ॥१॥
[7]शूद्राविशोस्तु करणोऽ[8]म्बष्ठो वैश्याद्विजन्मनोः ।
[9]शूद्राक्षत्रिययोरुग्रो [10]मागधः क्षत्रियाविशोः ॥२॥
[11]माहिष्योऽर्याक्षत्रिययोः [12]क्षत्तार्याशूद्रयोः सुतः ।

(१) द्वे गोलोम्या । (२) द्वे रक्तचन्दनस्य [पतङ्ग] (३) त्र्यूषणस्य त्रीणि । [ सोंठ मरीच पीपल तीनों मिलित ]। (४) त्रिफलायो द्वे [ 'हरैं बहेरा आँवला' ]।

(५) चत्वारि शूद्रस्य । (६) एक वर्णसङ्कराणाम् । (७) वैश्याच्छूद्रायामुत्पन्नस्यैकम् । (८) विप्राद्वैश्यायामुत्पन्नस्यैकम् । (९) क्षत्रियाच्छूद्रायामुत्पन्नस्यैकम् । (१०) वैश्यान् क्षत्रियायामुत्पन्नस्यैकम् । (११) क्षत्रियाद्वैश्यायामुत्पन्नस्यैकम् । (१२) वैश्याच्छूद्रायामुत्पन्नस्यैकम् ।

(१)ब्राह्मण्यां क्षत्रियात्सूतस्त(२)स्यां वैदेहको विशः ॥३॥
(३)रथकारस्तु माहिष्यात्करण्यां यस्य सम्भवः ।
(४)स्याच्चाण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥४॥
(५)कारुः शिल्पी सं(६)हतैस्तै(७)र्द्वयोः श्रेणिः सजातिभिः ।
[ तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ॥ ]
(७)कुलकः स्यात्कुलश्रेष्ठो (८)मालाकारस्तु मालिकः ॥५॥
(९)कुम्भकारः कुलालः स्या(१०)त्पलगण्डस्तु लेपकः ।

(१) ब्राह्मण्यां क्षत्रियादुत्पन्नस्यैकम् । (२) ब्राह्मण्या वैश्याज्जातो वैदेहकः । ( ३ ) करण्या = शूद्रावैश्यपुत्र्यां—माहिष्यात् = वैश्याक्षत्रियपुत्रात्—उत्पन्नो रथकार । (४) ब्राह्मण्यां शूद्रादुत्पन्न—चण्डाल. । (५) द्वे चित्रकारादे. । तदुक्तम्—

"तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मता ॥"

( ६ ) सजातीयशिल्पिसङ्घस्यैकं स्त्रीपुंसयो ( ७ ) शिल्पिसङ्घाधिपतेर्द्वे । कुलश्रेष्ठी नान्त । ( ८ ) मालाकारस्य द्वे । [ 'माली' ] । ( ९ ) द्वे कुलालस्य । [ 'कुम्भार' ] (१०) गृहादौ लेपकारस्य द्वे ।

[१]तन्तुवायः कुविन्दः [२]स्यात्तुन्नवायस्तु सौचिकः ॥६॥
[३]रङ्गाजीवश्चित्रकारः [४]शस्त्रमार्जोऽसिधावकः ।
[५]पादूकृच्चर्मकारः स्याद्[६]व्योकारो लोहकारकः ॥७॥
[७]नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः ।
[८]स्याच्छाङ्खिकः काम्बविकः [९]शौल्बिकस्ताम्रकुट्टकः ॥८॥
[१०]तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् ।
[११]ग्रामाधीनो ग्रामतक्षः [१२]कौटतक्षोऽनधीनकः ॥९॥

---

(१) द्वे तन्तुवायस्य [ जुलाहा'] (२) सौचिकस्य द्वे [ 'दर्जी' ] (३) द्वे चित्रकारस्य [ 'चितेरा' 'रंगरेज' 'छीपी' 'लीलगर' ] (४) द्वे शस्त्रमार्जस्य [ 'सिकलीगर' 'शान धरने वाला' ] (५) द्वे चर्मकारस्य [ मोची' 'चमार']। ( ६ ) द्वे लोहकारस्य [ लोहार ]। ( ७ ) चत्वारि स्वर्णकारस्य। कलादादिद्वय 'जडिया' 'पच्चीकारी करनेवाला' इति प्रसिद्धयोर्नामेति परे। ( ८ ) द्वे शाङ्खिकस्य [ 'शख की चूडी आदि बनाने वाला' ] ( ९ ) द्वे शौल्बिकस्य [ 'ठठेरा' ] (१०) पञ्च वर्धके [ बढई, 'खाती' 'सुतार' ]। काष्ठतट्-क्षान्त। (११) द्वे ग्रामसेवकस्य वर्धके। (१२) एक स्वतन्त्रस्य रथकारस्य।

[1]क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः ।
निर्णेजकः[2] स्याद्रजकः शौण्डिको[3] मण्डहारकः ॥१०॥
जाबालः[4] स्यादजाजीवो देवाजीवस्तु[5] देवलः ।
स्यान्माया[6] शाम्बरी मायाकारस्तु[7] प्रतिहारिकः ॥११॥
शैलालिनस्तु[8] शैलूषा जायाजीवाः कृशाश्विनः ।
भरता इत्यपि नटाश्चारणास्तु[9] कुशीलवाः ॥१२॥
मार्दङ्गिकाः[10] मौरजिकाः पाणिवादास्तु[11] पाणिघाः ।
वेणुध्माः[12] स्युर्वैणविका वीणावादास्तु[13] वैणिकाः ॥१३॥

(१) पञ्च नापितस्य। (२) द्वे रजकस्य ['धोबी']। (३) द्वे शौण्डिकस्य। ['शुण्डी' 'कलवार']। (४) द्वे जाबालस्य [रेवड पालने वाला]। (५) द्वे देवलस्य। [पूजारी] (६) द्वे इन्द्रजालादिमायायाः [जादू] (७) द्वे मायिकस्य। ['बाजीगर' 'ओझा']। (८) षट् नटानाम्। शैलालि—कृशाश्विनौ नान्तौ। (९) चारणस्य द्वे। ['चारण' 'भाट']। (१०) मृदङ्गवादनशीलस्य द्वे [तबलची] (११) हस्तवादनोपजीविनः ['चुटकी' 'ताली' बजाने वाला]। (१२) द्वे वेणुवादनशीलस्य [वंशी बजाने वाला] (१३) द्वे वीणावादकस्य।

जीवान्तकः[1] शाकुनिको द्वौ वागुरिकजालिकौ[2] ।
वैतंसिकः[3] कौटिकश्च मांसिकश्च समं त्रयम् ॥१४॥
भृतको[4] भृतिभुक् कर्मकरो वैतनिकोऽपि सः ।
वार्तावहो[5] वैवधिको भारवाहस्तु[6] भारिकः ॥१५॥
विवर्णः[7] पामरो नीचः प्राकृतश्च पृथग्जनः ।
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥१६॥
भृत्ये[8] दासेयदासेरदासगोप्यकचेटकाः ।
नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः ॥१७॥
पराचितपरिस्कन्दपरजातपरैधिताः[9] ।

---

(१) द्वे जीवान्तकस्य ['बहेलिया']। (२) द्वे जालिकस्य [ जाल फैलाने वाला व्याध ] (३) त्रीणि मांसविक्रयोपजीविन. [ 'खटीक' ] (४) चत्वारि भृतकस्य [ नौकर ] (५) वार्तावहस्य द्वे ['कावडिया' 'बहगी वाला']। (६) द्वे भारवाहकस्य [ 'पल्दार' बोझा ढोनेवाला' ] (७) दश नीचस्य। (८) एकादश दासस्य [ 'गुलाम' 'गोला' 'दरोगा' ]। (९) चत्वारि परपुष्टस्य। [ दूसरे से पालित ]।

[१]मन्दस्तुन्दपरिमृजआलस्यःशीतकोऽलसोऽनुष्णः
[२]दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ॥१८॥
[३]चाण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः ॥ १९ ॥
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः ।
[४]भेदाःकिरातशबरपुलिन्दा म्लेच्छजातयः ॥२०॥
[५]व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।
[६]कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥२१॥
शुनको भषकः श्वा [७]स्यादलर्कस्तु स योगितः ।
[८]श्वा विश्वकद्रुर्मृगयाकुशलः [९]सरमा शुनी ॥२२॥
[१०]विट्चरः सूकरो ग्राम्यो [११]वर्करस्तरुणः पशुः ।

(१) षट् अलसस्य [ आलसी ] (२) षट् चतुरस्य [ 'चतुर' 'चलाक' ] (३) दश चाण्डालस्य । (४) चण्डालविशेषाणामेकैकम् । (५) चत्वारि व्याधस्य [ 'मुमहर' ] । (६) सप्त कुक्कुरस्य [ 'कुत्ता' ] । (७) मत्तशुनः [ 'पागल कुत्ता' ] (८) एक मृगयापटोः कुक्कुरस्य [ शिकारी कुत्ता ] । (९) द्वे शुन्या. [ 'कुत्ती' ] । (१०) एक ग्राम्यशूकरस्य [ 'शुअर' ] । (११) एक तरुणपशोः ।

[1]नाराची स्यादेषणिका [2]शाणस्तु निकषः कषः ।३२।
[3]व्रश्चनः पत्रपरशुरे[4]षिका तूलिका समे ।
[5]तैजसावर्तनी मूषा [6]भस्त्रा चर्मप्रसेविका ॥३३॥
[7]आस्फोटनी वेधनिका [8]कृपाणी कर्तरी समे ।
[9]वृक्षादनी वृक्षभेदी [10]टङ्कः पाषाणदारणः ॥३४॥
[11]क्रकचोऽस्त्री करपत्रमा[12]रा चर्मप्रभेदिका ।
[13]सूर्मी स्थूणाऽयःप्रतिमा [14]शिल्पं कर्म कलादिकम् ३५
[15]प्रतिमानं प्रतिबिम्बं प्रतिमाप्रतियातनाप्रतिच्छाया

---

(१) सुवर्णतुलाया द्वे, [कांटा]। (२) त्रीणि शाणस्य [शान धरने का यन्त्र'] निकषोपलस्य वा ['कसौटी']। (३) द्वे पत्रपरशो., ['छेनी' 'करौती']। (४) तृणशलाकाया द्वे [ 'तुली' ]। (५) द्वे मूषाया ['घड़िया']। ( ६ ) द्वे भस्त्राया ['भाथी']। ( ७ ) द्वे मुक्तादिवेधिन्या [छेदनिकालनेवाला यन्त्र = बर्मी]। ( ८ ) द्वे कर्त्र्याः ['कैंची']। ( ९ ) द्वे वृक्षादन्या ['वसूला']। (१०) द्वे टङ्कस्य [ टाँकी 'छेनी' 'हथौड़ा' ]। (११) द्वे करपत्रस्य [करौत]। (१२) द्वे चर्मप्रभेदिकाया [ आरी ]। (१३) लौहप्रतिमाया त्रीणि। (१४) कलाकौशलादि कर्म—शिल्पम्। (१५) अष्टौ प्रतिमायाः ['तसवीर' 'फोटो' 'मूर्त्ति']।

प्रतिकृतिरर्चा पुंसि प्रतिनिधि[1]रुपमोपमानं स्यात् ॥
वाच्यलिङ्गाः [2]समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥३७॥
[3]निभसंकाशनीकाशप्रतीकाशोपमादयः ।
[4]कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ॥३८॥
भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।
[5]सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा ॥३९॥
गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता ।
मदिरा कश्यमद्ये चाप्य[6]वदंशस्तु भक्षणम् ॥४०॥
[7]शुण्डापानं मदस्थानं [8]मधुवारा मधुक्रमाः ।

---

(१) एकमुपमायाः; एकमुपमानस्य च। दश प्रतिमाया इत्येके। (२) सदृशस्य सप्त, वाच्यलिङ्गाः। (३) निभादय उत्तरपदगताः सदृशवचनाः। यथा पितृनिभः, देवसंकाश इत्यादौ। (४) एकादश वेतनस्य ['तनखाह' 'नौकरी']। (५) त्रयोदश मद्यस्य। (६) एकमवदंशस्य [मद्य पीने के बाद खाने की चाट—गजक]। (७) मद्यगृहस्य त्रीणि। [कलवरिया]। (८) मद्यपानावसरस्य द्वे।

[1]मध्वासवो माधवको मधु माध्वीकमद्वयोः ॥४१॥
मैरेय[2]मासवः सीधु[3]र्मेदको जगलः समौ ।
[4]सन्धानं स्यादभिषवः [5]किण्वं पुंसि तु नग्नहूः ॥४२॥
[6]कारोत्तरः सुरामण्ड [7]आपानं पानगोष्ठिका ।
[8]चषकोऽस्त्री पानपात्रं [9]सरकोऽप्यनुतर्षणम् ॥४३॥
[10]धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ।
[11]स्युर्लग्नकाः प्रतिभुवः [12]सभिका द्यूतकारकाः ॥४४॥
[13]द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ।
[14]पणोऽक्षेषु ग्लहो[15]ऽक्षास्तु देवनाः पाशकाश्च ते ॥४५॥

---

(१) मद्यभेदस्य चत्वारि [सीरानी] मधु क्लीबे । (२) (३) द्वे मद्यकल्कस्य । (४) द्वे मद्यसन्धानस्य [मदिरा बनाना]। (५) द्वे किण्वस्य । (६) सुरामण्डस्य द्वे । (७) पानगोष्ठ्या द्वे । (८) द्वे पानपात्रस्य। [ प्याला ]। (९) द्वे मद्यपानस्य । चत्वार्येकार्थानीत्यन्ये। (१०) पञ्च द्यूतकृत [ जुवारी ]। (११) द्वे प्रतिभुवः [ 'जामिन' 'बिचवैया' ](१२) द्यूतकारकाणां द्वे । (१३) चत्वारि द्यूतस्य [ जूवा ]। द्यूतोऽस्त्रियाम्। (१४) द्यूते पणस्य द्वे [ 'दाओ' ]। (१५) त्रीणि पाशकस्य ['पासा' 'कौड़ी'] ।

परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ।
[1]अष्टापदं [2]शारिफलं [3]प्राणिद्यूतं समाह्वयः ॥४६॥
[4]उक्ता भूरिप्रयोगत्वादेकस्मिन् येऽत्र यौगिकाः ।
ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते॥४७॥
इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
द्वितीयकाण्डो भूम्यादिः साङ्ग एव समर्थितः॥१॥

ॐ इत्यमरसिंहकृतौ नामलिङ्गानुशासने द्वितीयं काण्डम् ॐ

(१) एकशारीणां समन्ताच्चालनस्य [स्यार चलाना]। (२) द्वे शारिफलस्य [ 'चौपड']। (३) प्राणिद्यूतस्य द्वे [ 'मुर्ग' 'भेडा' आदि की लडाई में हार जीत पर बाजी लगाना]। (४) अत्र = वर्गे ये यौगिकाः—मालाकारादिशब्दाः प्रचुर-प्रयोगदर्शनात् पुल्लिङ्गादावेकत्रैव उक्ता, ते ताद्धर्म्यादन्यलिङ्गेऽपि बोध्याः। यथा मालाकरणात् स्त्री अपि मालाकारी, कुलमपि मालाकारम्—इत्यादि। ये चायौगिकाः जातिवाचकाः करणादिशब्दास्तेपि पुंयोगादिना, ताद्धर्म्याच्च स्त्रिया क्लीबे च बोध्याः। यथा—करणस्य स्त्री करणी, कुम्भकारीत्यादि।

ॐ इति मरुमण्डलमार्तण्ड—श्रीस्नेहिरामजिशास्त्रिणां पौत्रेण, श्रीशिवनारायणशास्त्रिणां पुत्रेण, कविचक्रचक्रवर्त्तिना श्रीरघुनन्दनप्रसादशास्त्रिणा कलितायामभिनवराजलक्ष्म्यां द्वितीयं काण्डम् ॐ

॥ श्रीः ॥

# ❀ अथ तृतीयं काण्डम् ❀



## ❀ विशेष्यनिघ्नवर्गः ❀

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि ।
लिङ्गादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥१॥
स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।
गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥२॥

(१) सामान्ये = सामान्यकाण्डे—विशेष्यनिघ्नादिभिरुपलक्षिताः, वर्गसंश्रया = पूर्वोक्तस्वर्गादिवर्गाश्रया —वर्गा —उच्यन्ते। 'सुकृती पुण्यवान्धन्य' इत्यादीनां स्वर्गमनुष्यादिवर्गोक्तदेवमनुष्यादिविशेषणतया—वर्गाश्रयत्वं सामान्यकाण्डस्य स्पष्टमेव। (२) स्त्री-दार-कलत्रादिभिश्शब्दैर्यादृशैर्यल्लिङ्गसंख्याविशिष्टैः, यद्विशेष्य = स्त्रीदारकलत्रादिरूप, प्रस्तुतं = प्रक्रान्त, तस्य—द्रव्यगुणक्रियाशब्दा भेदका = विशेषणानि स्युः। गुणशब्दो यथा—धन्या स्त्री, धन्याः दाराः, धन्यं कलत्रम्। द्रव्यशब्दो यथा—दण्डिनी स्त्री, दण्डिनो दाराः, दण्डि कलत्रम्। क्रियाशब्दो यथा—पाचिका स्त्री, पाचका दाराः, पाचकं कलत्रमिति। त्रिलिङ्गताऽत्राचशब्दानामित्याशय।

[1]सुकृती पुण्यवान् धन्यो [2]महेच्छस्तु महाशयः ।
[3]हृदयालुः सुहृदयो [4]महोत्साहो महोद्यमः ॥३॥
[5]प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥४॥
[6]पूज्यः प्रतीक्ष्यः [7]सांशयिकः संशयापन्नमानसः ।
[8]दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि ॥५॥
[9]स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे ।
[10]जैवातृकःस्यादायुष्मान्[11]अन्तर्वाणिस्तु शास्त्रवित् ६
[12]परीक्षकः कारणिको [13]वरदस्तु समर्धकः ।
[14]हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥७॥

(१) त्रीणि भाग्यशालिन.। सुकृती, सुकृतिनौ । पुण्यवान्, पुण्यवन्तौ । ( २ ) द्वे महाशयस्य । ( ३ ) द्वे शुद्धमनसः । 'सहृदय' इत्यपि । (४) द्वे महोत्साहस्य । (५) दश कर्मकुशलस्य । (६) द्वे पूज्यस्य । (७) द्वे सशयापन्नस्य । (८) त्रीणि दक्षिणायोग्यस्य । (९) चत्वारि दानवीरस्य । (१०) द्वे आयुष्मत । (११) द्वे शास्त्रतत्त्वज्ञस्य । (१२) द्वे परीक्षकस्य । (१३) द्वे वरदस्य । (१४) चत्वारि प्रहर्षितस्य ।

[1]दुर्मना विमना अन्तर्मना स्या[2]दुत्क उन्मनाः ।
[3]दक्षिणे सरलोदारौ [4]सुकलो दातृभोक्तरि ॥८॥
[5]तत्परे प्रसितासक्ता[6]विष्टार्थोद्युक्त उत्सुकः ।
[7]प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ॥९॥
[8]गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ ।
[9]इभ्य आढ्यो धनी [10]स्वामी त्वीश्वरः पतिरीशिता
अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ।
[11]अधिकर्द्धिःसमृद्धःस्यात्[12]कुटुम्बव्यापृतस्तु यः ११
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् ।
[13]वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥१२॥

(१) त्रीणि दुःखितमनसः । (२) द्वे उत्कण्ठितस्य । (३) त्रीणि सरलाशयस्य । (४) एकं दानभोगशीलस्य । (५) तत्परस्य त्रीणि । (६) द्वे इष्टार्थोद्युक्तस्य । पञ्चापि पर्याया इत्येके । (७) षट् प्रसिद्धस्य । (८) द्वे शौर्यादिगुणैः प्रसिद्धस्य । (९) त्रीणि धनिनः । (१०) दश ईश्वरस्य । (११) द्वे सम्पन्नस्य । (१२) त्रीणि कुटुम्बपालनपरस्य । (१३) एकं—सुन्दरशरीररूपाकृते ।

[1]निर्वार्यः कार्यकर्ता यः सम्पन्नः सत्त्वसम्पदा ।
[2]अवाचि मूकोऽथ [3]मनोजवसः पितृसन्निभः ॥१३॥
[4]सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः ।
[5]लक्ष्मीवाँल्लक्ष्मणःश्लीलःश्रीमान्[6]स्निग्धस्तु वत्सलः
[7]स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः ।
[8]स्वतन्त्रोऽपावृतःस्वैरी स्वच्छन्दो निरवग्रहः ॥१५॥
[9]परतन्त्रः पराधीनः परवान्नाथवानपि ।
[10]अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ
[11]खलपूः स्याद्[12]बहुकरो दीर्घसूत्रश्चिरक्रियः ।

---

( १ ) एकं सत्त्वसम्पन्नस्य—निश्शङ्कं कार्यकर्तुं । ( २ ) द्वे मूकस्य। ( ३ ) द्वे पितृसमस्य । अदन्तोपि मनोजव., सान्तोपि मनोजवाश्च । (४) एक सत्कारपूर्वकं कन्यादातरि । (५) चत्वारि श्रीमत । (६) द्वे वत्सलस्य । (७) चत्वारि दयालो· । (८) पञ्च स्वतन्त्रस्य । (९) चत्वारि परतन्त्रस्य । (१०) पञ्चाधीनमात्रस्य । नवापि पर्याया इत्येके । (११) द्वे भूमिसमार्जनकर्तु । [ झाड़ देनेवाला ] । (१२) द्वे विलम्बेन कार्यं कुर्वत ।

[1]जाल्मोऽसमीक्ष्यकारी स्यात्[2]कुण्ठो मन्दः क्रियासु यः
[3]कर्मक्षमोऽलङ्कर्मीणः [4]क्रियावान् कर्मसूद्यतः ।
[5]स कार्मः कर्मशीलो यः [6]कर्मशूरस्तु कर्मठः ॥१८॥
[7]भरण्यभुक्कर्मकरः [8]कर्मकारस्तु तत्क्रियः ।
[9]अपस्नातो मृतस्नात [10]आमिषाशी तु शौष्कलः १९
[11]बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः ।
[12]परान्नः परपिण्डादो [13]भक्षको घस्मरोऽद्मरः ॥२०॥
[14]आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।
[15]उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके २१

---

(१) द्वे अविचार्य कार्यं कुर्वत । (२) एकं मन्दक्रियस्य । (३) द्वे क्रियाकरणसमर्थस्य । (४) एकमुद्योगशीलस्य । (५) फलमनपेक्ष्य कर्मसु प्रवृत्तस्य तच्छीलस्य द्वे । (६) आरब्धकार्यसमापकस्य कर्मशूरस्य द्वे । (७) वेतनादिना कर्म कुर्वतो द्वे । (८) वेतन विनाऽपि कर्म कुर्वत एकम् । (९) द्वे मृतमुद्दिश्य स्नातस्य ।(१०) द्व मासाशिन । (११) चत्वारि क्षुधितस्य । (१२) द्वे परान्नभोजनपरस्य । (१३) त्रीणि भक्षणपरस्य । (१४) द्वे विजिगीषाशून्यस्य उदरपरायणस्य । (१५) स्वोदरपूरकस्य द्वे ।

[1] सर्वान्नीनस्तु सर्वान्नभोजी [2] गृध्नुस्तु गर्धनः ।
लुब्धोऽभिलाषुकस्तृष्णक् [3] समौ लोलुपलोलुभौ २२
[4] उन्मदस्तून्मदिष्णुः [5] स्यादविनीतः समुद्धतः ।
[6] मत्ते शौण्डोत्कटक्षीबाः [7] कामुके कमितानुकः २३
कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः ।
[8] विधेयो विनयग्राही वचनेस्थित आश्रवः ॥२४॥
[9] वश्यः प्रणेयो [10] निभृतविनीतप्रश्रिताः समाः ।
[11] धृष्टे धृष्णग्वियातश्च [12] प्रगल्भः प्रतिभान्विते २५
[13] स्यादधृष्टे तु शालीनो [14] विलक्षो विस्मयान्विते ।

---

(१) सर्ववर्णान्नभक्षकस्य द्वे । (२) पञ्च लुब्धस्य । (३) द्वे अतिलुब्धस्य । (४) द्वे उन्मादशीलस्य । (५) अविनीतस्य द्वे । (६) चत्वारि उन्मत्तस्य । (७) नव कामुकस्य । (८) चत्वारि वचने स्थितस्य आज्ञापालकस्य । (९) स्वाधीनस्य द्वे । (१०) त्रीणि विनययुक्तस्य । (११) त्रीणि अविनीतस्य–निर्लज्जस्य, धृष्णग् जान्त' । (१२) द्वे प्रगल्भस्य । (१३) द्वे सलज्जस्य । (१४) द्वे विस्मितस्य ।

[1]अधीरे कातरस्त्रस्ते [2]भीरुभीरुकभीलुकाः ॥२६॥
[3]आशंसुराशंसितरि [4]गृहयालुर्ग्रहीतरि ।
[5]श्रद्धालुः श्रद्धया युक्ते [6]पतयालुस्तु पातुके ॥२७॥
[7]लज्जाशीलोऽपत्रपिष्णुर्[8]वन्दारुरभिवादके ।
[9]शरारुर्घातुको हिंस्रः[10]स्याद्वर्धिष्णुस्तु वर्धनः ॥२८॥
[11]उत्पतिष्णुस्तूत्पतिता[12]ऽलङ्करिष्णुस्तु मण्डनः ।
[13]भूष्णुर्भविष्णुर्भविता [14]वर्तिष्णुर्वर्तनः समौ ॥२९॥
[15]निराकरिष्णुः क्षिप्नुः स्यात्[16]सान्द्रस्निग्धस्तु मेदुरः
[17]ज्ञाता तु विदुरो विन्दुर्[18]विकासी तु विकस्वरः ३०

(१) द्वे व्याकुलचित्तस्य । (२) चत्वारि भयशीलस्य । (३) इष्टप्राप्तीच्छोर्द्वे । (४) ग्रहणशीलस्य द्वयम् । ( ५ ) एकं श्रद्धायुक्तस्य । ( ६ ) द्वे पतनशीलस्य (७) द्वे लज्जाशीलस्य । ( ८ ) वन्दनशीलस्य नामद्वयम् । ( ९ ) त्रीणि हिंसाशीलस्य । ( १० ) द्वे वर्धनशीलस्य । ( ११ ) द्वे ऊर्ध्वपतनशीलस्य । (१२) द्वे अलङ्करणशीलस्य । (१३) त्रीणि भवनशीलस्य । (१४) द्वे वर्तनशीलस्य । ( १५ ) द्वे निराकरणशीलस्य । ( १६ ) द्वे निविडस्निग्धस्य । (१७) त्रीणि ज्ञानशीलस्य । ( १८ ) द्वे विकसनशीलस्य ।

विसृत्वरो[1] विसृमरः प्रसारी च विसारिणि ।
सहिष्णुः[2] सहनः क्षन्ता तितिक्षुःक्षमिता क्षमी २१
क्रोधनो[3]ऽमर्षणः कोपी चण्डस्त्व[4]त्यन्तकोपनः ।
जागरूको[5] जागरिता घूर्णितः[6] प्रचलायितः ॥२२॥
स्वप्नक्[7] शयालुर्निद्रालुर्निद्राणशयितौ समौ ।
पराङ्मुखः पराचीनः स्या[10]दवाङप्यधोमुखः ॥२३॥
देवा[11]नञ्चति देवद्र्यङ् विष्व[12]द्र्यङ् विष्वगञ्चति ।
यः[13]सहाञ्चति सध्र्यङ् स स तिर्यङ्[14] यस्तिरोऽञ्चति
वदो[15] वदावदो वक्ता वागीशो[16] वाक्पतिः समौ ।

---

(१) चत्वारि प्रसरणशीलस्य। (२) षट् सहनशीलस्य। (३) त्रीणि क्रोधनस्य। (४) अतिक्रोधनस्य द्वे। (५) जागरूकस्य। (६) द्वे सञ्जातघूर्णस्य [ ऊँघता हुआ ]। (७) त्रीणि निद्राशीलस्य। स्वप्नक् जान्त॰। (८) द्वे निद्रितस्य। (९) द्वे विमुखस्य। (१०) अधोमुखस्य द्वे। (११) देवानुवर्त्तिनो द्वे। (१२) एक सर्वतो गच्छत. (१३) एक सह गच्छत सहचरस्य। (१४) वक्र गच्छत एकम्। (१५) त्रीणि वक्तु। (१६) द्वे पटुवाक्यस्य।

[1]वाचोयुक्तिपटुर्वाग्ग्मी वावदूकोऽतिवक्तरि॥३५॥
[2]स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्।
[3]दुर्मुखे मुखराबद्धमुखौ [4]शक्लः प्रियंवदे ॥३६॥
लोहलः[5] स्यादस्फुटवाग्[6]गर्ह्यवादी तु कद्वदः।
[7]समौ कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः॥३७॥
[9]रवणः शब्दनो [10]नान्दीवादी नान्दीकरः समौ।
[11]जडोऽज्ञ एडमूकस्तु[12] वक्तुं श्रोतुमशिक्षिते॥३८॥
[13]तूष्णींशीलस्तु तूष्णीको [14]नग्नोऽवासा दिगम्बरे।

---

(१) चत्वारि वाचोयुक्तिपटो। केचित्तु—पूर्वे द्वे नैयायिकस्य, अन्त्यद्वयं बहुभाषिणि इत्याहुः। (२) चत्वारि वाचालस्य [ बकवादी ]। (३) त्रीणि अप्रियवचनस्य। (४) द्वे प्रियवचनस्य। (५) द्वे अस्फुट भाषिणि। (६) द्वे दुर्भाषिणि। (७) द्वे दोषकथनशीलस्य। (८) द्वे रूक्षस्वरस्य। (९) द्वे शब्दकरणशीलस्य [ बड़बड़िया ]। (१०) नाटकादौ मङ्गलार्थं भेर्यादिवादकस्य द्वे। (११) द्वे जड़मते। (१२) श्रवणभाषणयोरयोग्य स्याशिक्षितयैकम्। (१३) द्वे मौनशीलस्य। (१४) त्रीणि नग्नस्य।

निष्कासितोऽवकृष्टः स्याद्पध्वस्तस्तु धिक्कृतः॥३९
आत्तगर्वोऽभिभूतः स्याद्दापितःसाधितः समौ।
प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः
निकृतः स्याद्विप्रकृतो विप्रलब्धस्तु वञ्चितः।
मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः ॥४१॥
अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ।
आपन्न आपत्प्राप्तःस्यात्कान्दिशीको भयद्रुतः॥४२
आक्षारितः क्षारितोऽभिशस्ते संक्सुकोऽस्थिरे।

---

(१) द्वे निष्कासितस्य। (२) द्वे धिक्कृतस्य। (३) द्वे भग्नदर्पस्य। चत्वारि धिक्कृतस्येत्येके। (४) द्वे धनादिकं प्रदापितस्य, तादृशस्य धनस्य वा। [दिलाया गया] (५) चत्वारि प्रत्याख्यातस्य। (६) द्वे तिरस्कृतस्य। (७) द्वे वञ्चितस्य। (८) चत्वारि मनोहतस्य। [मानसिक चोट खाया हुआ]। (९) द्वे कृताक्षेपस्य। (१०) त्रीणि बद्धस्य। (११) द्वे आपद्ग्रस्तस्य। (१२) द्वे भयपलायितस्य। (१३) मैथुनादिनिमित्तेन मिथ्यादूषितस्य त्रीणि। (१४) चपलस्वभावस्य द्वे।

[1]व्यसनार्तोपरक्तौ द्वौ वि[2]हस्तव्याकुलौ समौ ४३
वि[3]क्लवो विह्वलः स्यात्तु वि[4]वशोऽरिष्टदुष्टधीः ।
[5]कश्यः कशार्हे सं[6]नद्धे त्वाततायी वधोद्यते ॥४४॥
द्वे[7]ष्ये त्वक्षिगतो [8]वध्यः शीर्षच्छेद्य इमौ समौ ।
वि[9]ष्यो विषेण यो वध्यो मु[10]सल्यो मुसलेन यः॥४५॥
शि[11]श्विदानोऽकृष्णकर्मा [12]चपलश्चिकुरः समौ ।
दो[13]षैकदृक् पुरोभागी नि[14]कृतस्त्वनृजुः शठः ॥४६॥
[15]कर्णेजपः सूचकः स्यात्[16]पिशुनो दुर्जनः खलः ।

---

(१) द्वे मानुषदैवपीडायुक्तस्य। (२) द्वे व्याकुलस्य। (३) द्वे स्वाङ्गमपि धारयितुमशक्तस्य। (४) भाव्यनिष्टादिदूषितमतेर्द्वे। (५) द्वे ताडनार्हस्य। (६) एक वधोद्यतस्य। (७) द्वे द्वेषार्हस्य। (८) द्वे शिरश्छेदार्हस्य। (९) एकं विषेण वध्यस्य। (१०) एक मुसलेन वध्यस्य। (११) द्वे पुण्यकर्मण। कृष्णकर्मेति पाठे तु—पापाचारस्य। (१२) द्वे दोषमनिश्चित्यापि बन्धादिकारकस्य, चपलस्य वा। (१३) द्वे दोषैकदृष्टे। (१४) त्रीणि कुटिलाशयस्य। (१५) द्वे सूचकस्य [ चुगलखोर ]। (१६) त्रीणि खलस्य। केचित्तु सूचकपर्याया एते पञ्चेत्याहुः।

[1]नृशंसो घातुकः क्रूरः पापो [2]धूर्तस्तु वञ्चकः ॥४७॥
[3]अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ।
[4]कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः ॥४८॥
निः[5]स्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।
[6]वनीयको याचनको मार्गणो याचकार्थिनौ ॥४९॥
[7]अहङ्कारवानहंयुः [8]शुभंयुस्तु शुभान्वितः ।
[9]दिव्योपपादुका देवा [10]नृगवाद्या जरायुजाः ॥५०॥
[11]स्वेदजाः कृमिदंशाद्याः [12]पक्षिसर्पादयोऽण्डजाः ।

❀ इति प्राणिवर्गः ❀

---

(१) चत्वारि नृशंसस्य [ निर्दयो ]। (२) द्वे धूर्तस्य। (३) षण्मूर्खस्य। (४) पञ्च कृपणस्य। (५) पञ्च निर्धनस्य। (६) पञ्च याचकस्य। (७) द्वे अहङ्कारयुक्तस्य। (८) द्वे शुभान्वितस्य। (९) मातापित्रादिदृष्टकारणशून्याः—अदृष्टसहकृतेभ्योऽणुभ्यो जाता ये देवास्ते दिव्योपपादुका इत्युच्यन्ते।

(१०) एकं जरायुजानाम्। (११) एकं स्वेदजानां यूकादीनाम्। (१२) एकमण्डजानां पक्षिसर्पादीनाम्।

[1]उद्भिदस्तरुगुल्माद्याः [2]उद्भिदुद्भिज्जमुद्भिदम् ॥५१॥
[3]सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥५२॥
[4]तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।
[5]अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥५३॥
[6]निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।
कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥५४॥
[7]मलीमसं तु मलिनं कच्चरं मलदूषितम् ।
[8]पूतं पवित्रं मेध्यञ्च [9]वीध्रन्तु विमलार्थकम् ॥५५॥
[10]निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् ।
[11]असारं फल्गु [12]शून्यं तु वशिकं तुच्छरिक्तके ॥५६॥

---

( १ ) एक तरुगुल्मादीनाम् । ( २ ) त्रीणि उद्भिदाम् । ( ३ ) द्वादश मनोरमस्य । ( ४ ) यस्य दर्शनात्तृप्तिर्न भवति तस्यैकम् । ( ५ ) षट् प्रियस्य । ( ६ ) त्रयोदशाधमस्य । ( ७ ) चत्वारि मलिनस्य । (८) त्रीणि पवित्रस्य । (९) द्वे निर्मलस्वभावस्य । (१०) पञ्च शोधितस्य [ साफ किया हुआ ] । (११) द्वे निःसारस्य । (१२) चत्वारि तुच्छस्य ।

[1]क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ।
मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत् ॥५७॥
परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ।
[2]श्रेयान् श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥५८॥
[3]स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥५९॥
[4]अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने ।
[5]विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ॥६०॥
वड्रोरु विपुलं पीनपीव्नी [6]तु स्थूलपीवरे ।
[7]स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ।६१।

---

(१) सप्तदश श्रेष्ठस्य । (२) पश्चातिशोभनस्य । केचित्तु—एकविंशति. शोभनस्येत्याहु । (३) व्याघ्रसिंहकुञ्जरादय उत्तरपदे सन्त. श्रेष्ठार्थवाचका, यथा—पुरुषव्याघ्र = पुरुषश्रेष्ठः । ( ४ ) त्रीणि अप्रधानस्य । अप्रधानो-पसर्जने नित्यं क्लीबे । ( ५ ) नव विशालस्य । [ वड्र = वडा ] ( ६ ) चत्वारि स्थूलस्य । (७) चतुर्दश सूक्ष्मस्य । मात्रात्रुटी—स्त्रियाम् । लवादय. पुंसि ।

स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः ।
[1]अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥
[2]प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥६३
[3]परःशताद्यास्ते येषां परा संख्या शतादिकात् ।
[4]गणनीये तु गणेयं [5]संख्याते गणितमथ [6]समं सर्वम्
विश्वमशेषंकृत्स्नंसमस्तनिखिलाखिलानिनिःशेषम्
समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥६५॥
[7]घने निरन्तरं सान्द्रं [8]पेलवं विरलं तनु ।
[9]समीपे निकटासन्नसन्निकृष्टसनीडवत् ॥६६॥
सदेशाभ्याशसविधसमर्यादसदेशवत् ।

---

(१) पञ्च स्वल्पस्य । (२) द्वादश बहुलस्य । (३) एक शतात्परस्य । [ सैकड़ों ] । (४) द्वे गणयितुं शक्यस्य । (५) द्वे गणितस्य । (६) चतुर्दश समग्रस्य । [ पूरा ] ( ७ ) त्रीणि निविडस्य [ घना ] । ( ८ ) त्रीणि विरलस्य । ( ९ ) पञ्चदश समीपस्य ।

उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्
[1]संसक्ते त्वव्यवहितमपदान्तरमित्यपि ।
[2]नेदिष्ठमन्तिकतमं [3]स्याद्दूरं विप्रकृष्टकम् ॥६८॥
[4]दवीयश्च दविष्ठं च सुदूरं [5]दीर्घमायतम् ।
[6]वर्तुलं निस्तलं वृत्तं [7]बन्धुरं तून्नतानतम् ॥६९॥
[8]उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ [9]वामने ।
न्यङ्नीचखर्वह्रस्वाः [10]स्युरवाग्रेऽवनतानते ॥७०॥
[11]अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम् ।
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥७१॥
[12]ऋजावजिह्मप्रगुणौ [13]व्यस्ते त्वप्रगुणाकुलौ ।

(१) त्रीणि संलग्नस्य। (२) द्वे अतिनिकटस्य। (३) द्वे दूरस्य। (४) त्रीणि अत्यन्तदूरस्य। (५) द्वे दीर्घस्य। (६) त्रीणि वर्तुलस्य[ गोल ]। (७) द्वे उन्नतानतस्य। [ ऊँचा–नीचा ]। (८) षट्—उन्नतस्य। (९) पञ्च ह्रस्वस्य। (१०) त्रयमधोमुखस्य। [ औंधा ]। (११) एकादश वक्रस्य। [टेढा] (१२) त्रीणि सरलस्य। (१३) त्रीणि आकुलस्य। [घबडाया]

[1]शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ॥७२
[2]स्थास्नुः स्थिरतरः स्थेयानेक[3]रूपतया तु यः ।
कालव्यापी स कूटस्थः [4]स्थावरो जङ्गमेतरः ॥७३
[5]चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् ।
[6]चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ॥
चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ।
[7]अतिरिक्तः समधिको [8]दृढसंधिस्तु संहतः ॥७५॥
[9]कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ।
जठरं मूर्तिमन्मूर्तं [10]प्रवृद्धं प्रौढमेधितम् ॥७६॥
[11]पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः ।
[12]प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥

---

(१) पञ्च नित्यस्य । (२) त्रीणि अतिस्थिरस्य । (३) एकं कूटस्थस्य । (४) द्वे अचरस्य वृक्षादे । (५) षट्—चरस्य । (६) दश चलस्य आद्यत्रयकम्पनशीलस्येत्येके । (७) द्वे अधिकस्य । (८) दृढसन्धेर्द्वे । (९) नव कठिनस्य । (१०) त्रीणि प्रवृद्धस्य । (११) पञ्च पुरातनस्य । (१२) सप्त नूतनस्य ।

नूतनश्च [1]सुकुमारं तु कोमलं मृदुलं मृदु ।
[2]अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ॥७८॥
[3]प्रत्यक्षं स्यादैन्द्रियकम[4]प्रत्यक्षमतीन्द्रियम् ।
[5]एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥७९॥
अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि सः ।
[6]पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ८०
[7]अन्तो जघन्यश्चरममन्त्यपाश्चात्यपश्चिमाः ।
[8]मोघंनिरर्थकं [9]स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ॥८१॥
[10]साधारणं तु सामान्य[11]मेकाकी त्वेक एककः ।
[12]भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ॥८२

(१) चत्वारि कोमलस्य । (२) चत्वारि पश्चादित्यर्थे । अनुपदम्, अन्वक्, अन्वक्षम्–अव्ययम् । अनुपदं अन्वक्ष क्लीबे । (३) द्वे इन्द्रियज्ञानस्य । (४) द्वे इन्द्रियेणाज्ञातस्य—परोक्षस्य । (५) सप्त एकाग्रस्य । (६) पञ्च आद्यस्य । (७) षट् अन्त्यस्य । (८) द्वे निष्प्रयोजनस्य । (९) चत्वारि स्पष्टस्य । (१०) द्वे सामान्यस्य । (११) त्रीणि असहायस्य । (१२) षट् भिन्नार्थका ।

[1]उच्चावचं नैकभेद[2]मुच्चण्डमविलम्बितम् ।
[3]अरुन्तुदन्तु मर्मस्पृग[4]बाधन्तु निरर्गलम् ॥८३॥
[5]प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ।
[6]वामं शरीरं सव्यं स्याद[7]पसव्यं तु दक्षिणम् ८४
[8]संकटं ना तु संबाधः [9]कलिलं गहनं समे ।
[10]संकीर्णं संकुलाकीर्णं [11]मुण्डितं परिवापितम् ८५
[12]ग्रन्थितं सन्दितं दृब्धं [13]विसृतं विस्तृतं ततम् ।
[14]अन्तर्गतं विस्मृतं स्यात्[15]प्राप्तप्रणिहिते समे ॥८६
[16]वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ।
[17]नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ॥

(१) द्वे अनेकप्रकारस्य । (२) द्वे उत्तालस्य । (३) द्वे मर्मपीडकस्य । मर्मस्पृक् मर्मस्पृशौ । (४) द्वे अबाधितस्य । (५) चत्वारि विरुद्धार्थस्य । (६) एकं सव्यशरीरस्य [ वामभागस्य, दक्षिणस्यापि क्वचित् ] । (७) शरीर-दक्षिणभागस्यैकम् । (८) द्वे सङ्कीर्णस्य । (९) द्वे दुष्प्रवेशस्य । (१०) त्रीणि सङ्कीर्णस्य । (११) द्वे कृतमुण्डनस्य । (१२) त्रीणि गुम्फितस्य । (१३) त्रीणि लब्धप्रसरस्य [ फैला हुआ ] (१४) द्वे विस्मृतस्य । (१५) द्वे प्राप्तस्य, स्थापितस्य च । (१६) षडीषत्कम्पितस्य । (१७) सप्त प्रेरितस्य ।

[1]परिक्षिप्तं तु निवृतं [2]मूषितं मुषितार्थकम् ।
[3]प्रवृद्धप्रसृते [4]न्यस्तनिसृष्टे [5]गुणिताहते ॥८८॥
[6]निदिग्धोपचिते [7]गूढगुप्ते [8]गुण्ठितरूषिते ।
[9]द्रुतावदीर्णे [10]उद्गूर्णोद्यते [11]काचितशिक्यिते ॥८९॥
[12]घ्राणघ्राते [13]दिग्धलिप्ते [14]समुदक्तोद्धृते समे ।
[15]वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम् ॥९०॥
[16]रुग्णं भुग्नेऽथ [17]निशितक्ष्णुतशातानि तेजिते ।
[18]स्याद्विनाशोन्मुखं पक्वं [19]ह्रीणह्रीतौ तु लज्जिते ॥

---

(१) द्वे पारिखादिवेष्टितस्य । (२) द्वे चोरितस्य । (३) द्वे प्रसृतस्य [बढा हुआ] (४) द्वे त्यक्तस्य । (५) द्वे गुणितस्य [गुणा किया हुआ] । (६) द्वे पुष्टि प्रापितस्य । (७) द्वे गुप्तस्य । (८) द्वे धूलिलिप्तस्य । (९) द्वे द्रुतस्य । [पिघला हुआ] । (१०) द्वे उत्तोलितस्य ['ताणा'–'उठाना' 'तानना']। (११) द्वे शिक्ये स्थापितस्य [ छींके पर रखा हुआ ] । (१२) द्वे आघ्रातस्य । (१३) द्वे लिप्तस्य । (१४) द्वे उद्धृतस्य जलादे । समे = प्रवृद्धप्रसृतादिकौ समानार्थौ। (१५) पञ्च नद्यादिवेष्टितस्य । (१६) द्वे वक्रस्य । (१७) चत्वारि शाणादिना तीक्ष्णीकृतस्य । (१८) द्वे विनाशोन्मुखस्य । (१९) त्रीणि सञ्जातलज्जस्य ।

[1]वृत्ते तु वृत्तव्यावृत्तौ [2]संयोजित उपाहितः ।
[3]प्राप्यं गम्यं समासाद्यं [4]स्यन्नं रीणं स्नुतं स्रुतम्
[5]संगूढः स्यात्संकलितो[6]ऽवगीतः ख्यातगर्हणः ।
[7]विविधः स्याद्बहुविधो नानानारूपः पृथग्विधः ॥
[8]अवरीणो धिक्कृतश्चाप्य[9]वध्वस्तोऽवचूर्णितः ।
[10]अनायासकृतं फाण्टं [11]स्वनितं ध्वनितं समे ॥
[12]बद्धे संदानितं मूतमुद्दितं संदितं सितम् ।
[13]निष्पक्वे क्वथितं पाके [14]क्षीराज्यहविषां शृतम्
[15]निर्वाणो मुनिवह्न्यादौ [16]निर्वातस्तु गतेऽनिले ।

(१) त्रीणि स्वयवरादौ स्वीकृतस्य वरादे । (२) द्वे मेलितस्य—संयुक्तस्य। ( ३ ) प्राप्तुं शक्तस्य । ( ४ ) चत्वारि प्रस्नुतस्य । [ 'झरता हुआ' ]। (५) अङ्कान्तरेणैकीकृतस्याङ्कादे [ जोड़ा हुआ ]। (६) द्वे अतिनिन्दितस्य। [ काफी बदनाम ]। (७) चत्वारि नानारूपस्य। (८) द्वे निन्दितसामान्यस्य। (९) अवचूर्णितस्य—नाशितस्य [ निक्षिप्तसुधाचूर्णस्येत्येके ]। (१०) अनायास कृतस्य क्वाथस्य द्वे। (११) द्वे कृतशब्दस्य। (१२) षड् बद्धस्य। (१३) द्वे साकल्येन पक्वस्य। ( १४ ) एकं क्षीरादिषु पक्वस्य। (१५) मुनिमरणस्य वह्न्यादिनिर्वाणस्य चैकम्। (१६) वातशून्यस्यैकम्।

[1]पक्वं परिणते [2]गूनं हन्ने [3]मीढं तु मूत्रिते ॥९६॥
[4]पुष्टे तु पुषितं सोढे [5]क्षान्त[6]मुद्वान्तमुद्गते ।
[7]दान्तस्तु दमिते [8]शान्तःशमिते [9]प्रार्थितेऽर्दितः ॥
[10]ज्ञप्तस्तुज्ञपिते [11]छन्नश्छादिते [12]पूजितेऽञ्चितः ।
[13]पूर्णस्तु पूरिते [14]क्लिष्टः क्लिशितेऽ[15]वसिते सितः ॥९८॥
[16]प्रुष्टप्लुष्टोषिता दग्धे त[17]ष्टत्वष्टौ तनूकृते ।
वेधित[18]च्छिद्रितौ विद्धे [19]विन्नवित्तौ विचारिते ॥९९॥
नि[20]ष्प्रभे विगतारोकौ विलीने विद्रु[21]तद्रुतौ ।

(१) पक्वस्य द्वे । (२) द्वे गुदनिःसृतपुरीषस्य । (३) द्वे उपस्थ निष्कासितमूत्रस्य । (४) यस्य पोषणं कृतन्तस्य द्वे । (५) सोढस्य द्वे । (६) कृतस्य वमनस्य द्वे । (७) कृत दमन यस्य तस्य वृषभादेर्द्वे । (८) द्वे शमनं प्रापितस्य। (९) द्वे याचितस्य (१०) द्वे बोधं प्रापितस्य । (११) द्वे आच्छादितस्य । (१२) द्वे पूजितस्य । (१३) द्वे पूर्णस्य । (१४) द्वे प्राप्तक्लेशस्य । (१५) द्वे समाप्तस्य । (१६) चत्वारि दग्धस्य । (१७) त्रीणि तनूकृतस्य । (१८) त्रीणि विद्धस्य । (१९) त्रीणि विचारितस्य । (२०) निष्प्रभस्य त्रीणि । (२१) त्रीणि स्वतोद्रवीभूतस्य ।

सिद्धे[1] निर्वृत्तनिष्पन्नौ दारिते[2] भिन्नभेदितौ ।१०१
ऊतं[3] स्यूतमुतं चेति त्रितयं तन्तुसन्तते ।
स्यादर्हिते[4] नमस्यितनमसितमपचायितार्चितापचितम् ।
वरिवसिते[5] वरिवस्यितमुपासितञ्चोपचरितञ्च ।
सन्तापित[6]सन्तप्तौ धूपितधूपायितौ च दूनश्च १०२
हृष्टे[7] मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ।
छिन्नं[8] छातं लूनं कृत्तं दातं दितं छितं वृक्णम् १०३
स्रस्तं[9] ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ।
लब्धं[10] प्राप्तं विन्नं भावितमासादितं च भूतञ्च १०४
अन्वेषितं[11] गवेषितमन्विष्टं मार्गितं मृगितम् ।
आर्द्रं[12] सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तञ्च १०५

---

(१) त्रीणि सिद्धस्य । (२) त्रीणि विदारितस्य । (३) चत्वारि स्यूतस्य [सीया हुआ] । (४) षट् नमस्कृतस्य । (५) चत्वारि पूजितस्य । (६) पञ्च सन्तापितस्य । (७) षट् प्रमुदितस्य । (८) अष्टौ छिन्नस्य । (९) सप्त च्युतस्य । (१०) षट् प्राप्तस्य । (११) पञ्च गवेषितस्य । (१२) सप्त आर्द्रस्य ।

[1]त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ।
[2]अवगणितमवमतावज्ञातेऽवमानितश्च परिभूते १०६
[3]त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ।
[4]उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् १०७
[5]बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ।
[6]ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् १०८
संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ।
[7]ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि १०९
अपि गीर्णवर्णिताभिष्टुतेडितानि स्तुतार्थानि ।
[8]भक्षितचर्वितलीढप्रत्यवसितगिलितखादितप्सातम् ११०
अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ।

---

(१) षट्—रक्षितस्य । (२) पञ्च अवमानितस्य । (३) षट् त्यक्तस्य । (४) सप्त उक्तस्य । (५) सप्त ज्ञातस्य । (६) एकादश स्वीकृतस्य । (७) द्वादश स्तुतस्य । (८) चतुर्दश खादितस्य—चर्वितस्य ।

क्षेपि[1]ष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥१११॥
क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुलप्रकर्षार्थाः ।
[2]साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥११२॥
बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ।

❀ इति विशेष्यनिघ्नवर्गः ॥ १ ॥ ❀

---

## ❀ अथ संकीर्णवर्गः ❀

[3]प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत् ।

---

(१) एकैकमतिशयक्षिप्रादीनाम् । (२) एकैकमतिशयितबाढाद्यर्थकम् । यथा—अतिशयेन बाढम्—साधिष्ठम्—इत्यादि ।

(३) सङ्कीर्णार्थलिङ्गकशब्दैरारब्धत्वात् 'सङ्कीर्णवर्ग' इति नाम । तथाचात्र सङ्कीर्णे वर्गे—प्रकृत्यर्थेन प्रत्ययार्थेन [क्वचिद्रूपभेदादिना च—] लिङ्गमुन्नयेत् । प्रकृत्यर्थेन यथा—'अपरस्परा' इत्यत्र 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो'रित्यनेन परवर्तिपरशब्दस्येव लिङ्गं भवति, परशब्दश्च त्रिलिङ्ग इति अपरस्परशब्दोऽपि त्रिलिङ्गः ।

प्रत्ययार्थेन यथा—शान्तिः, गतिः । अत्र स्त्रियां क्तिनो विधानात्स्त्रीलिङ्गता । रूपभेदेन च कर्णशब्दादेः क्लीबत्वम् । साहचर्येण—डित्थादेः पुंस्त्वम् । केचित्तु—

[1]कर्म क्रिया [2]तत्सातत्ये गम्ये स्युरपरस्पराः ॥१॥
[3]साकल्यासंगवचने पारायणतुरायणे ।
[4]यदृच्छा स्वैरिता [5]हेतुशून्या त्वास्या विलक्षणम् ।२।
[6]शमथस्तु शमः शान्तिर्[7]दान्तिस्तु दमथो दमः ।
[8]अवदानं कर्म वृत्तं [9]काम्यदानं प्रवारणम् ॥३॥
[10]वशक्रिया संवननं [11]मूलकर्म तु कार्मणम् ।

---

भिन्नजातीयेन लिङ्गेन संसर्गे सति अत्र वर्गे, वर्गान्तरे च प्रकृत्यर्थाद्येलिङ्गं ज्ञेयम्, इत्यथच लिङ्गसंग्रहे वक्ष्यमाणमपि लिङ्गमुन्नेयमित्यर्थमाहु । (१) द्वे क्रियायाः । (२) क्रियायाः क्रियावताश्च सातत्ये—अपरस्परशब्द इत्यर्थ । अपरे च परे च–अपरस्परा । क्रियासातत्ये—अपस्पर गच्छन्तीत्यादिषु क्लीवता । क्रियावतां सातत्ये त्रिलिङ्गता,—अपरस्परा सार्था गच्छन्ति, अपरस्पराः स्त्रिय आगच्छन्ति, अपरस्पराणि कुलानि । (३) साकल्यवचने—पारायणम्, आसङ्गवचने-तुरायणम् । (४) द्वे स्वातन्त्र्यस्य । ( ५ ) हेतुशून्यस्थितेरेकम् । ( ६ ) त्रीणि शान्तेः । ( ७ ) त्रीणि तपःक्लेशसहनाख्यस्य दमस्य । ( ८ ) प्रशस्तकर्मणो द्वे । (९) द्वे काम्यदानस्य । (१०) द्वे वशीकरणस्य । (११) द्वे ओषधिमूलादिभिरुच्चाटनादेः [ 'कामण'–'जादू' ] ।

विधूननं[1] विधुवनं तर्पणं[2] प्रीणनावनम् ॥४॥
पर्याप्तिः[3] स्यात्परित्राणं हस्तवारणमित्यपि ।
सेवनं[4] सीवनं स्यूतिर्विदरः[5] स्फुटनं भिदा ॥५॥
आक्रोशनमभीषङ्गः[6] संवेदो[7] वेदना न ना ।
संमूर्च्छनमभिव्याप्तिर्[8]याच्ञाभिक्षाऽर्थनाऽर्दना[9]
वर्धनं[10] छेदनेऽथ द्वे आनन्दनसभाजने[11] ।
आप्रच्छनमथाम्नायः[12] संप्रदायः क्षये[13] क्षिया ॥
ग्रहे[14] ग्राहो वशः[15] कान्तौ रक्षणस्त्राणे[16] रणः[17] क्वणे ।

---

(१) द्वे कम्पनस्य । (२) त्रीणि प्रीणनस्य । (३) त्रीणि परित्राणस्य । (४) त्रीणि सूचीक्रियायाः [ सीना ] (५) त्रीणि द्विधाभावस्य [ 'फटना' 'फूटना' ] । (६) द्वे गाल्यादिदानादेः—शापस्य । (७) द्वे अनुभवस्य । (८) द्वे सर्वतो व्याप्तेः । (९) चत्वारि याचायाः । (१०) द्वे कर्तनस्य । (११) त्रीणि आप्रच्छनस्य । [ कुशल-मङ्गल पूछना, पुचकारना ] (१२) द्वे गुरुपरम्परागतोपदेशादेः । (१३) द्वे अपचयस्य । (१४) द्वे ग्रहणस्य । (१५) द्वे इच्छायाः । (१६) द्वे रक्षणस्य । (१७) द्वे शब्दकारणस्य ।

व्यधो[1] वेधे पचा[2] पाके हवो[3] हूतौ वरो[4] वृतौ ॥८
ओषः[5] प्लोषे नयो[6] नाये ज्यानि[7]र्जीर्णौ भ्रमो[8] भ्रमौ।
स्फाति[9]र्वृद्धौ प्रथा[10] ख्यातौ स्पृष्टिः[11] पृक्तौ स्नवः[12] स्रवे
एधा[13] समृद्धौ स्फुरणे[14] स्फुरणा प्रमितौ[15] प्रमा।
प्रसूतिः[16] प्रसवे श्च्योते[17] प्राघारः क्लमथुः[18] क्लमे १०
उत्कर्षो[19]ऽतिशये सन्धिः[20] श्लेषे विषय[21] आश्रये।
क्षिपायां[22] क्षेपणं गीर्णि[23]र्गिरौ गुरण[24]मुद्यमे ॥११॥
उन्नाय[25] उन्नये श्रायः[26] श्रवणे जयने[27] जयः।

---

(१) द्वे वेधनस्य। (२) द्वे पाकस्य। (३) द्वे आह्वानस्य। (४) द्वे वेष्टनस्य [ घेरना ] ( ५ ) द्वे दाहस्य ( ६ ) द्वे नीतेः। ( ७ ) द्वे हानेः। ( ८ ) द्वे भ्रमणस्य। ( ९ ) द्वे वृद्धेः। ( १० ) ख्यातेर्द्वयम्। ( ११ ) द्वे स्पर्शनस्य। (१२) प्रस्रवणस्य। (१३) द्वे धनसम्पत्तेः। (१४) स्फुरणस्य। (१५) प्रमाज्ञानस्य द्वे। (१६) प्रसवस्य प्रेरणस्य वा। (१७) चरणस्य द्वे। (१८) द्वे ग्लाने.। (१९) द्वे उत्कर्षस्य। (२०) सन्धानस्य। (२१) आश्रयस्य। (२२) प्रेरणस्य। (२३) द्वे निगरणस्य। (२४) द्वे भाराद्युद्यमनस्य। (२५) ऊहस्य ऊर्ध्वनयनस्य च द्वे। (२६) सेवाया.। (२७) द्वे नयस्य।

[1]निगादो निगदे [2]मादो मद [3]उद्वेग उद्भ्रमे ॥१२॥
[4]विमर्दनं परिमलो[5]ऽभ्युपपत्तिरनुग्रहः ।
[6]निग्रहस्तु निरोधः स्या[7]दभियोगस्त्वभिग्रहः ॥१३॥
[8]मुष्टिबन्धस्तु संग्राहो [9]डिम्बे डमरविप्लवौ ।
[10]बन्धनं प्रसितिश्चारः [11]स्पर्शः स्प्रष्टोपतप्तरि ॥१४॥
[12]निकारो विप्रकारः स्या[13]दाकारस्त्विङ्ग इङ्गितम् ।
[14]परिणामो विकारो द्वे समे [15]विकृतिविक्रिये ॥१५॥
[16]अपहारस्त्वपचयः [17]समाहारः समुच्चयः ।
[18]प्रत्याहार उपादानं [19]विहारस्तु परिक्रमः ॥१६॥

(१) द्वे कथनस्य। (२) द्वे हर्षस्य। (३) द्वे उद्वेगस्य। (४) कुङ्कुमादिमर्दनस्य द्वे। (५) द्वे अनुग्रहस्य। (६) अङ्गीकारस्य। (७) द्वे निग्रहस्य। (८) कलहाह्वानस्य [ झगड़ा करना ]। (९) त्रीणि उपद्रवस्य [ 'लूट' 'धाड़ा पड़ना' 'मार पीट' 'गाली गलौज' आदि ]। (१०) त्रीणि बन्धनस्य। (११) सन्तापस्य त्रीणि। [सन्तप्तस्येत्येके] (१२) द्वे अपकारस्य। (१३) अभिप्रायानुरूपचेष्टायास्त्रीणि। (१४) द्वे प्रकृतेरन्यथाभावे (१५) द्वे विक्रियायाः। चत्वारि परिणामस्येत्येके। (१६) द्वे अपहरणस्य। (१७) द्वे राशीकरणस्य [इकट्ठा करना] (१८) विषयेभ्य इन्द्रियपरावर्तनस्य। (१९) क्रीडार्थं सञ्चरणस्य [घूमना]

[१]अभिहारोऽभिग्रहणं [२]निर्हारोऽभ्यवकर्षणम् ।
[३]अनुहारोऽनुकारः स्यादर्थ[४]स्यापगमे व्ययः ॥१७
[५]प्रवाहस्तु प्रवृत्तिः स्यात्प्र[६]वहो गमनं बहिः ।
वि[७]यामो वियमो यामो यमः संयामसंयमौ १८
हिंसा[८]कर्माभिचारः स्याज्जा[९]गर्या जागरा द्वयोः ।
विघ्नो[१०]ऽन्तरायःप्रत्यूहः [११]स्यादुपघ्नोऽन्तिकाश्रये ॥
नि[१२]र्वेश उपभोगः स्यात्[१३]परिसर्पः परिक्रिया ।
वि[१४]धुरं तु प्रविश्लेषेऽभि[१५]प्रायश्छन्द आशयः॥२०॥

( १ ) चौर्यकरणस्य, आभिमुख्येन ग्रहणस्य वा । ( २ ) शल्यादे शस्त्रादेश्च युक्त्या निस्सारणस्य । ( ३ ) अनुहारस्य [ नकल करना ]। ( ४ ) एक व्ययस्य [ खर्च करना ] ( ५ ) द्वे प्रवाहस्य । ( ६ ) वहिर्गमनस्यैकम् । (७) षट् संयमनस्य । स्वामी तु--द्वे विविधयमनस्य, द्वे उपरतिमात्रस्य, द्वे च सयमनस्येत्याह । (८) द्वे अभिचारस्य [ 'मूठ' 'मारण' ] (९) द्वे जागरणस्य । (१०) त्रीणि प्रत्यूहस्य । (११) समीपभूते आश्रये एकम् । (१२) द्वे उपभोगस्य (१३) द्वे परिजनादिना वेष्टनस्य । ( १४ ) द्वे अत्यन्तवियोगस्य । ( १५ ) त्रीणि अभिप्रायस्य ।

संक्षेपणं समसनं पर्यवस्था विरोधनम् ।
परिसर्या परीसारः स्यादास्यात्वासनास्थितिः २१
विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः ।
संवाहनं मर्दनं स्याद्विनाशः स्याददर्शनम् ॥२२॥
संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणम् ।
नीवाकस्तु प्रयामः स्यात्सन्निधिः सन्निकर्षणम् २३
लवोऽभिलावो लवने निष्पावः पवने पवः ।
प्रस्तावः स्यादवसरस्त्रसरः सूत्रवेष्टनम् ॥२४॥

(१) द्वे सक्षेपस्य। (२) द्वे विरोधस्य। (३) द्वे सर्वतो गमनस्य। (४) त्रीणि आसनस्य। (५) त्रीणि पटादिविस्तारस्य। (६) शब्द-विस्तरस्यैकम्। (७) द्वे पादमर्दनादेः। (८) द्वे तिरोधानस्य। (९) द्वे परिचयस्य। (१०) द्वे व्रणादिप्रसरणस्य [ घाव का फैलना ] (११) धान्यसञ्चयस्य, जनानान्तरादरातिशयस्य वा द्वे। (१२) द्वे सन्निधानस्य। (१३) त्रीणि च्छेदनस्य। (१४) त्रीणि धान्यादीनां बहुलीकरणस्य। (१५) द्वे प्रस्तावस्य। (१६) सूत्रादिवेष्टनक्रियाया द्वे [ सूत लपेटना ]

**[1]प्रजनं स्यादुपसरः [2]प्रश्रयप्रणयौ समौ ।**
**धीशक्तिर्निष्क्रमोऽस्त्री [3]तु संक्रमो दुर्गसञ्चरः २५**
**[4]प्रत्युत्क्रमः प्रयोगार्थः [5]प्रक्रमः स्यादुपक्रमः ।**
**[6]स्यादभ्यादानमुद्घात आरम्भः [7]सम्भ्रमस्त्वरा २६**
**[8]प्रतिबन्धः प्रतिष्टम्भोऽ[9]वनायस्तु निपातनम् ।**
**[10]उपलम्भस्त्वनुभवः [11]समालम्भो विलेपनम् २७**
**[12]विप्रलम्भो विप्रयोगो [13]विलम्भस्त्वतिसर्जनम् ।**
**[14]विश्रावस्तु प्रतिख्याति[15]रवेक्षा प्रतिजागरः॥२८॥**

---

(१) प्रथमगर्भग्रहणस्य द्वे । (२) द्वे प्रीत्या प्रार्थनस्य । (३) द्वे बुद्धि सामर्थ्यस्य । तदुक्तं—

> शुश्रूषा श्रवणं चैव ग्रहणं धारणन्तथा ।
> ऊहापोहौ च विज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥' इति ।

(४) द्वे दुर्गमार्गस्य, तत्प्रवेशनक्रियाया वा । ( ५ ) द्वे कर्मारम्भे प्रथमप्रयोगस्य। (६) द्वे प्रथमारम्भस्य ।(७) त्रीण्यारम्भसामान्यस्य। 'पञ्चापि आरम्भस्ये' त्येके । (७) द्वे त्वरायाः । ( ८ ) द्वे निरोधस्य । (९) द्वे अधोनयनस्य । (१०) द्वे अनुभवस्य । (११) द्वे कुङ्कुमादिलेपनस्य । (१२) द्वे स्नेहिजनवियोगस्य। (१३) द्वे अतिदानस्य । (१४) द्वे अतिप्रसिद्धेः। (१५) द्वे अवेक्षणस्य ।

निपाठनिपठौ[1] पाठे तेमस्तेमौ[2] समुन्दने ।
आदीनवास्रवौ[3] क्लेशे मेलके[4] सङ्गसङ्गमौ ॥२९॥
संवीक्षणं[5] विचयनं मार्गणं मृगणा मृगः ।
परिरम्भः[6] परिष्वङ्गः संश्लेष उपगूहनम् ॥३०॥
निर्वर्णनन्तु[7] निध्यानं दर्शनालोकनेक्षणम् ।
प्रत्याख्यानं[8] निरसनं प्रत्यादेशो निराकृतिः ॥३१॥
उपशायो[9] विशायश्च पर्यायशयनार्थकौ ।
अर्तनं[10] च ऋतीया च हृणीया च घृणार्थकाः ३२
स्याद्[11]व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये ।
पर्ययो[12]ऽतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥३३॥

---

(१) त्रीणि पठनस्य । (२) त्रीणि आर्द्रीभावस्य । (३) त्रीणि क्लेशस्य । (४) त्रीणि सङ्गमस्य । (५) पञ्च—अन्वेषणस्य । 'मृगये'त्यपि पाठ । (६) चत्वारि—आलिङ्गनस्य । (७) पञ्च वीक्षणस्य । (८) चत्वारि निराकरणस्य । (९) द्वे प्रहरकादौ पर्यायेण शयनस्य [ पारी २ से सोना ] । (१०) चत्वारि जुगुप्सनस्य—घृणाया' (११) चत्वारि व्यत्यासस्य । (१२) चत्वारि अतिक्रमस्य [ उलंघना ] ।

प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनम् ।
स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् ३४
निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।
स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ३५
आविधो विध्यते येन तत्र विष्वक्समे निघः ।
उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ३६
[ निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ]
आरत्यवरतिविरतय उपरामेऽथास्त्रियान्तु निष्ठेवः
निष्ठ्यूतिर्निष्ठीवनं निष्ठेवनमित्यभिन्नानि ॥३७॥

---

( १ ) एक भृत्यादेराहूय प्रेषणस्य । ( २ ) एक यज्ञे स्तावकद्विजात्रस्थानभूमे । ( ३ ) एकम्—उद्घनस्य [ जिस काठ पर रखकर खाती लकड़ी, काटता है । 'उठगना' ] (४) तृणगुच्छादिच्छेदनसाधनस्य द्वे ['रांपड़ो'] । ( ५ ) भ्रमरवेधनसूच्यादे [ 'वर्मी' 'वर्मा' ] (६) तुल्यारोहपरिणाहस्य वृक्षादेरेकम् । वेधनभेदस्येति गौडाः । ( ७ ) द्वे धान्यानामूर्ध्वं क्षेपणस्य । (८) निगरणस्यैक [ निगलना ] । उद्गारस्यैकं [डकार लेना] । विक्षवणस्यैकं, [ छींकना ] । उद्ग्रहणस्यैकम् । (९) चत्वार्युपरमणस्य । (१०) चत्वारि मुखेन श्लेष्मनिरसनस्य । [ थूकना ] ।

[1]जवने जूतिः [2]सातिस्त्ववसाने स्यादथ [3]ज्वरे जूर्तिः।
[4]उदजस्तु पशुप्रेरणम[5]करणिरित्यादयः शापे ॥३८॥
[6]गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम्।
[7]आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ॥३९॥
[8]माणवानां तु माणव्यं [9]सहायानां सहायता।
[10]हल्या हलानां [11]ब्राह्मण्यवाडव्ये तु द्विजन्मनाम् ४०
द्वे [12]पर्शुकानां पृष्ठानां पार्श्वपृष्ठ्यमनुक्रमात्।
[13]खलानां खलिनी खल्याऽप्यथ [14]मानुष्यकं नृणाम् ४१

(१) द्वे वेगस्य। (२) द्वे समापनस्य [ समाप्त करना ]। (३) द्वे ज्वरणस्य [ बुखार आना ]। (४) द्वे पशुप्रेरणस्य [ हाँकना ]। (५) अजननिः, अवग्राहः, निग्राह इत्यादीनि शापे। (६) गोत्रप्रत्ययान्तेभ्यो वृन्दमित्यर्थे वुञ् भवति, तथाच—उपगोरपत्यानि औपगवाः, तेषां समूहः—औपगवकमित्यादि। (७) अचेतनापूपादिवृन्दे आपूपिकं शाष्कुलिकमित्यादि भवति। (८) एकं माणवसमूहे। (९) एकं सहायसमूहे। (१०) एकं हलसमूहस्य। (११) द्वे ब्राह्मणसमूहस्य। (१२) पर्शुकसमूहस्यैकम्। पृष्ठसमूहस्य चैकम्। (१३) द्वे खलसमूहस्य। (१४) एकं मनुष्यसमूहस्य।

ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथक् ।
अपि साहस्रकारीषचार्मणाथर्वणादिकम् ॥४२॥

❀ इति सङ्कीर्णवर्गः ॥ २ ॥ ❀

———:o:———

❀ अथ नानार्थवर्गः ❀

नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।
भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥ १ ॥
आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ।

---

( १ ) ग्राम जन-धूम पाश-गलसमूहे पृथगेकैकम् ( २ ) सहस्राणां करीषाणां चर्मणामथर्वणाञ्च समूहे एकैकम् ।

( ३ ) केऽपि नानार्था अत्र कान्तखान्तादिवर्गेषु एव कथिता, न पूर्ववर्गेषु । यथा—'क'शब्द । ये च शब्दा येषु पर्यायेषु प्रचुरप्रयोगा—ते तेषु पूर्वत्र कथिताः । अपिशब्दादत्र कान्तादिवर्गे च कथिता । यथा नाकशब्दः स्वर्गे प्रचुरप्रयोग इति स्वर्गपर्यायेषु पूर्वमुक्त, अत्र कान्तवर्गेऽपि च उक्त इति । ( ४ ) आकाशे स्वर्गे च—नाकः । ( ५ ) भुवने जने च—लोकः ।

[1]पद्ये यशसि च श्लोकः[2]शरे खड्गे च सायकः ॥२॥
[3]जम्बुकौ क्रोष्टुवरुणौ [4]पृथुकौ चिपिटार्भकौ ।
[5]आलोकौ दर्शनोद्योतौ [6]भेरीपटहमानकौ ॥३॥
[7]उत्सङ्गचिह्नयोरङ्कः [8]कलङ्कोऽङ्कापवादयोः ।
[9]तक्षको नागवर्धक्योर्[10]अर्कः स्फटिकसूर्ययोः ॥४॥
[11]मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः ।
[12]स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥५॥

---

(१) पद्ये कीर्तौ च–श्लोकः। (२) बाणे खड्गे च–सायकः। (३) शृगाले वरुणे च जम्बुकः। (४) चिपिटे बाले च–पृथुकः। [ चिपिट. = चिउडा ]। (५) दर्शनप्रकाश-वन्दिनभाषणेषु–आलोकः। (६) भेर्यां पटहे मृदङ्गे ध्वनदम्बुदे च–आनकः। (७) उत्सङ्गचिह्नयोः रूपकविशेषापराधचिह्नरेखाभिभूषणरूपकांशसमोपेषु च–अङ्कः। (८) कलङ्कोऽङ्केऽपवादे च कालायसमलेपि चेति मेदिनी। (९) सर्पभेदे वर्द्धकौ च–तक्षकः। (१०) 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पता'विति मेदिनी। (११) को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे। मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु कम्–इति मेदिनी। ब्रध्न· = सूर्यः। (१२) तुच्छ धान्यादिषु–पुलाकः। [ भक्तसिक्थक = भात की किनकी ]।

[1]उलूके करिणः पुच्छमूलोपान्ते च पेचकः ।
[2]कमण्डलौ च करकः [3]सुगते च विनायकः ॥६॥
किष्कुर्[4]हस्ते वितस्तौ च [5]शूककीटे च वृश्चिकः ।
[6]प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम् ॥७॥
[7]स्याद्भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च ।
[8]ज्योत्स्निकायां च घोषे च कोशातक्यथ[9]कट्फले ८
सिते च खदिरे सोमवल्कः स्यादथ सिल्हके ।

---

( १ ) उलूकहस्तिपुच्छप्रान्तभागयोः–पेचकः । (२) 'करकस्तु–पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपलेन स्त्री करके च कमण्डलौ'–इति मेदिनी । ( ३ ) 'विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' इति मेदिनी । ( ४ ) किष्कुर्द्वयोर्वितस्तौ च सप्रकोष्ठकरेऽपि चेति मेदिनी । (५) 'वृश्चिकस्तु द्रुणौ राशौ शूककीटौषधीभिदो.' इति मेदिनी । (६) 'प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः' इति मेदिनी । एकदेशे पुसि, त्वन्यत्र त्रिषु । (७) 'स्याद्भूतिकन्तु भूनिम्बे दीप्यभूस्तृणकत्तृणे' इति मेदिनी । (८) ज्यौत्स्निका = पटोलिका, घोष –अपामार्ग । कोशातकः कचे पुसि पटोल्या घोषके स्त्रियाम्' इति मेदिनी । (९) सितखदिरकट्फलयो सोमवल्कः ।

तिलकल्के च पिण्याको बाह्लीकं रामठेऽपि च॥९
महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः।
रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि क्षुल्लकस्त्रिषु॥१०
जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्तकः।
व्याघ्रेऽपि पुण्डरीको ना यवान्यामपि दीपकः॥११
शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम्।

---

(१) पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके' इति मेदिनी। (२) बाह्लीकं—बाह्लिकं धीरहिङ्गुनोर्नाश्वदेशयोरिति रभस। (३) महेन्द्रः = इन्द्र', व्यालग्राही = अहितुण्डिक [ सँपेरा ]। कौशिको नकुले व्यालग्राहि गुग्गुलुशाल्यो., विश्वामित्रे च कोशशोलूकयोरपि कौशिकः—'इति विश्व.। (४) 'आतङ्को–रोगसन्तापशङ्कासु मुरजध्वनौ'–इति कोश। (५) 'क्षुल्लक त्रिषु नीचेऽल्पे' इति मेदिनी। (६) 'जैवातृकः–पुमान्सोमे दीर्घायु. कृशयोरपि' इति कोश। (७) 'वर्तकस्तु खुरेऽश्वस्य विहगे वर्त्तिका द्वयो'रिति कोश'। (८) 'पुण्डरीकः—सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि चेति कोश। (९) दीपकं–वागलङ्कारे वाच्यवद्दीपिकारके। दीपकश्चाजमोदायां यवानीवर्हिचूडयो' इति मेदिनीकोशः। (१०) त्रिष्वर्थेषु शालावृकः। (११) गैरिक–धातुरुक्मयो' इति, मेदिनीकोश.।

पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते ॥१२॥
शीलान्वयावनूके द्वे शल्के शकलवल्कले ।
साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ॥१३॥
दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री शमलैनसोः
दम्भेऽप्यथ पिनाकोऽस्त्री शूलशङ्करधन्वनोः॥१४॥
धेनुका तु करेण्वाञ्च मेघजाले च कालिका ।

(१) '—व्यलीको नागरे स्मृत । व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने—इति विश्व । (२) 'अलीकमप्रियेऽपि स्याद्गोध्यमत्ये नपुसकम्'—इति मेदिनीकोश. । (३) 'अनूकन्तु कुले शीले पुंसि स्याद्गतजन्मनि' इति मेदिनीकोश । (४) शकलं = खण्डम्, वल्कलं = त्वक । (५) 'निष्कमस्त्री साष्टहेमशते दीनारकर्षयो । वक्षोऽलंकरणे हेमभाजे हेमपलेऽपि चे'ति मेदिनी । [ दीनार = मोहर ] । (६) 'कल्कोऽस्त्री घृततैलादिशेषे दम्भे विनीतके । विट्किट्टयोश्च पापे च त्रिषु पापाशये पुन ' इति मेदिनी । (७) 'पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः' इति मेदिनी । (८) करेणुधेन्वोर्धेनुका । (९) 'कालिका चण्डिकाभेदे कार्ष्ण्ये वृश्चिकपत्रयोः । क्रमदेये वस्तुमूल्ये धूसरीनवमेघयो । पटोलशाखारोमाली मांसीकाकीशिवासु च । मेघावली च' इति मेदिनी ।

[1]कारिका यातनावृत्त्योः [2]कर्णिका कर्णभूषणे॥१५॥
करिहस्तेऽङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे।
[3]वृन्दारकौ रूपिमुख्यावेके [4]मुख्यान्यकेवलाः॥१६॥
[5]स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः।
लाला[6]टिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः॥१७॥
[ [7]भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्।

(१) कारिका–नट्योविति। कृतौ विवरणश्लोके शिल्पयातनयोरपि। नपुंसकन्तु कर्मादौ कारकं कर्त्तरि त्रिषु–मेदिनी। कृत्योरित्यपि पाठ.। (२) 'कर्णिका–करिहस्ताग्रे करमध्याङ्गुलावपि। क्रमुकादिच्छटांशेब्जवराटे कर्णभूषणे' इति मेदिनी। (३) खान्तेभ्य प्रागुत्तरे 'वृन्दारक–सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु'–इति मेदिनी। (४) एकं सख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु–इति मेदिनी। (५) नीचैर्लोचनो दाम्भिकश्च–कौक्कुटिक (६) 'लालाटिकः प्रभोर्भालदर्शिन्याक्षेपणान्तरे कार्याक्षमे'–इति मेदिनी। 'भावदर्शी''त्यपि पाठं क्वचित् 'लालाटिकः सदालस्ये प्रभोर्भावनिदर्शिनी'त्यजयकोशात्। (७) पर्वतनितम्ब वलय चक्रेषु कटकः।

[ ] एतच्चिह्नान्तर्गता पद्यश्लोकाः प्रक्षिप्ता।

[1]सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ॥१८॥
[2]पाकौ पक्तिशिशू [3]मध्यरत्ने नेतरि नायकः ।
[4]पर्यङ्कः स्यात्परिकरे [5]स्याद्व्याघ्रेऽपि च लुब्धकः ॥१९
[6]पेटकस्त्रिषु वृन्देऽपि [7]गुरौ देश्ये च देशिकः ।
[8]खेटकौ ग्रामफलकौ धीवरेऽपि च जालिकः ॥२०॥
[10]पुष्परेणौ च किञ्जल्कः [11]शुल्कोऽस्त्री स्त्रीधनेऽपि च ।
[12]स्यात्कल्लोलेऽप्युत्कलिका [13]वार्धकं भाववृन्दयोः ॥२१
[14]करिण्यां चापि गणिका [15]दारकौ बालभेदकौ ।

---

(१) सूच्यग्रभाग—क्षुद्रशत्रु–रोमाञ्चेषु–कण्टकः । (२) पाकबाल्योः–पाकः । (३) हारमध्यमणौ नेतरि च नायकः । (४) मञ्चके परिकरे च पर्यङ्कः । (५) व्याघ्रे व्याधे च—लुब्धकः । (६) वृन्दे मञ्जूपायाश्च–पेटकः । (७) द्वयोरर्थयोर्देशिकः । (८) ग्रामे चर्मफलके च खेटकः । (९) धीवरेऽपि जालिकः । (१०) केसरपुष्परेण्वो —किञ्जल्कः । (११) घट्टादिदेये स्त्रीधनेऽपि च–शुल्कः । (१२) उत्कण्ठाया कल्लोले च—उत्कलिका । (१३) वृद्धस्य वृन्दं भावो वा—वार्द्धकम् । (१४) करिणीवेश्ययोर्गणिका । (१५) बालक–भेदकयोर्दारकः ।

अ[1]न्धेऽप्यनेडमूकः स्याट्[2]ङ्कौ दर्पाश्मदारणौ ॥ ]

❀ इति कान्तवर्गः ❀

म[3]यूखस्त्विट्करज्वालास्व[4]लिबाणौ शिलीमुखौ ।
शं[5]खो निधौ ललाटास्थ्नि कम्बौ न स्त्रीन्द्रियेऽपि[6]खम्
घृ[7]णिज्वाले अपि शिखे—

❀ इति खान्तवर्गः ❀

—शैलवृक्षौ[8] नगावगौ ।

---

(१) अन्धे वक्तुं श्रोतुं चासमर्थेऽनेडमूकः । (२) गर्वेऽश्मभेदने च टङ्कः [ टांकी ] । (३) 'मयूखः—किरणेऽपि च । ज्वालायामपि शोभायाम्' इति मेदिनी । (४) भ्रमरबाणयोः—शिलीमुखः । (५) 'शङ्खः—कम्बौ न योषिन्ना मालास्थ्नि निधिभित्—नखे' इति मेदिनी । (६) 'खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्' इति मेदिनी । (७) 'शिखा—ज्वाला बर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायाञ्च ज्वालायां प्रपदेऽपि च' इति मेदिनी । (८) 'नगो महीरुहे शैले भास्करे पवनाशने' इति मेदिनी । नगवद्गोऽपि ।

[1]आशुगौ वायुविशिखौ [2]शरार्कविहगाः खगाः ॥२४

[3]पतङ्गौ पक्षिसूर्यौ च [4]पूगः क्रमुकवृन्दयोः ।
[5]पशवोऽपि मृगा [6]वेगः प्रवाहजवयोरपि ॥२५॥
[7]परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ।
[8]गजेऽपि नागमातङ्गा[9]वपाङ्गस्तिलकेऽपि च ॥२६॥
[10]सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ।

---

(१) वायुवाणावाशुगौ । (२) खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे' इति मेदिनी । (३) पतङ्गः—शलभे शालिप्रभेदे पक्षिसूर्ययोः । क्लीबे सूते' इति मेदिनी । (४) क्रमुकवृक्षे वृन्दे च—पूगः ।

(५) 'मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयो । अन्वेषणायां याच्ञायां मृगी तु वनितान्तरे' इति मेदिनी । (६) वेगो रयप्रवाहयोः । रेतः किम्पाकयोश्चापि'—इति हैम' । (७) परागः—कौसुमे रेणौ धूलिस्नानीययोरपि । गिरिप्रभेदे विख्यातावुपरागे च चन्दने' इति मेदिनी । (८) नागं नपुसके रङ्गे सीसके करणान्तरे । नागः पन्नगमातङ्गक्रूराचारिषु तोयदे । नागकेसर-पुन्नागनागदन्तकमस्तके । देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरे स्थित'मेदिनी । 'मातङ्गः श्वपचे गजे' इति मेदिनी । (९) 'अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेपि च' इति मेदिनी । (१०) सर्गस्तु निश्चयाध्यायमोक्षोत्साहात्म-सृष्टिषु' इति मेदिनी । (निर्मोक्ष = त्यागो, मोक्षाभावश्च ।)

[१]योगः संनहनोपायध्यानसंगतियुक्तिषु ॥२७॥
[२]भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।
[३]चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥२८॥
[४]कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे ।
[६]यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥२९॥
[७]स्वर्गेषु पशुवाग्वज्रादिङ्नेत्रघृणिभूजले ।

---

( १ ) योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । 'वपु स्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे । विस्रब्धघातके द्रव्योपायसन्नहनेष्वपि । कार्मणेपि च'इति मेदिनी । संनहनं कवचम् । उपायः = सामदानादि । ( २ ) 'भोगः—सुखे धने चाहेः शरीरफणयोर्मत । पालनेऽभ्यवहारे च निर्वेशे पण्ययोषिताम् ॥' इति विश्व । [भृतिः = भाडा] । (३) सारङ्गः—पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु'इति मेदिनी । ( ४ ) प्लवगो वानरे भेके सारथौ चोष्णदीधिते.' इति मेदिनी । ( ५ ) अभिषङ्गः—पराभवाक्रोशशपथेषु पुंसि ।

( ६ ) युगो रथे हलाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्तचतुष्केपि वृद्धिनामौषधेपि चे'ति मेदिनी । ( ७ ) गौः स्वर्गे च 'बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि चे'ति मेदिनी । लक्ष्यदृष्ट्या = प्रयोगानुसारेण स्त्रियां—पुंसि च गोशब्दो बोध्य इत्यर्थः ।

लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ[1]र्लिङ्गं चिह्नशेफसोः ३०
[2]श्रृङ्गं प्राधान्यसान्वोश्च [3]वराङ्गं मूर्धगुह्ययोः ।
[4]भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥३१॥

❀ इति गान्ताः ❀

[5]परिघः परिघातेऽस्त्रे[6]ऽप्योघो वृन्देऽम्भसां रये ।
[7]मूल्ये पूजाविधावर्घो[8]ऽहोदुःखव्यसनेष्वघम् ३२॥

---

(१) लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि। शिवमूर्तिविशेपे च मेहनेपि नपुंसकम्।' इति मेदिनी। (२) श्रृङ्गं—प्रभुत्वे शिखरे चिह्ने क्रीडाम्बु यन्त्रके [ पिचकारी ]। विपाणोत्कर्पयोश्चाथ श्रृङ्ग. स्यात्कूर्चशीर्पके। स्त्री विपायां स्वर्णमीनभेदयोर्ऋपभौपधौ'इति मेदिनी। ( ३ ) 'वराङ्गं योनिमातङ्ग—मस्तकेषु गुडत्वचि।' इति मेदिनी। ( ४ ) 'भगं—श्रीयोनिवीर्येच्छाज्ञान वैराग्यकीर्तिषु। माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ॥' इति मेदिनी। ( ५ ) 'परिघो योगभेदेऽस्त्रविशेपेऽर्गलघातयो'रिति मेदिनी।

( ६ ) ओघो वेगे जलस्य च। वृन्दे परम्परायाञ्च द्रुतनृत्योपदेशयो'इति मेदिनी। (७) मूल्ये पूजाविधौ च—अर्घः। ( ८ ) दुष्कृतदु.खव्यसनेपु—अघम्।

त्रिष्विष्टेऽल्पे लघुः—

❀ इति घान्ताः ❀

—काचाः[2] शिक्यमृद्भेददृग्रुजः।

विपर्यासे[3] विस्तरे च प्रपञ्चः पावके शुचिः ॥२३॥

मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु।

अभिष्वङ्गे[5] स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् २४

❀ इति चान्ताः ❀

[प्रसन्ने[6] भल्लुकेऽप्यच्छो गुच्छः स्तबकहारयोः।

परिधानाञ्चले[8] कच्छो जलप्रान्ते त्रिलिङ्गकः]

❀ इति छान्ताः ❀

केकिताक्ष्यावहिभुजौ दन्तविप्राण्डजा[10] द्विजाः।

---

(१) इष्टेऽल्पे च त्रिषु लघुः। (२) काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे ['काँच' 'सीसा']। (३) प्रपञ्चः सञ्चयेऽपि स्याद्विस्तरे च प्रतारणे।' इति मेदिनी। (४) शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु' इति मेदिनी।

(५) आलिङ्गने स्पृहायां किरणे दीप्तौ—शोभायाश्च स्त्रियां—रुचिः। (६) स्वच्छे भल्लूकेऽच्छः। (७) स्तवकहारयोर्गुच्छः। (८) वस्त्राञ्चले पुंसि। जलप्रान्ते च त्रिषु—कच्छः। (९) मयूरगरुडावहिभुजौ। (१०) अण्डजाः=पक्षिणः। 'द्विजः स्याद्ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना।

[1]अजा विष्णुहरच्छागा [2]गोष्ठाध्वनिवहा व्रजाः ३६
[3]धर्मराजौ जिनयमौ [4]कुञ्जो दन्तेऽपि न स्त्रियाम् ।
[5]वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना ॥३७॥
[6]समे क्ष्मांशे रणेऽप्याजिः [7]प्रजा स्यात्सन्ततौ जने ।
[8]अब्जौ शङ्खशशाङ्कौ च [9]स्वके नित्ये निजं त्रिषु ।३८

ॐ इति जान्ताः ॐ

[10]पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः ।

---

द्विजा भार्ग्या हरेणौ च—'इति मेदिनी । ( १ ) 'अजो हरौ हरे कामे विधौ छागे रवौ सुने' इति विश्व. । ( २ ) गोस्थानमार्गसमूहेषु व्रजः । (३) 'धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्' इति मेदिनी । (४) कुञ्जोऽस्त्रियां निकुञ्जेपि हनौ दन्तेपि दन्तिनाम्' इति मेदिनी । ( ५ ) 'वलजं गोपुरे क्षेत्रे सस्यसङ्गरयोरपि । वजला वरयोषायां पृथ्याम्—'इति मेदिनी । वल्गुदर्शना = सुन्दरी । ( ६ ) 'आजिः स्त्री समभूमौ च सङ्ग्रामे—'इति मेदिनी । ( ७ ) सन्ततौ = पुत्रादिसन्ताने, लोके च प्रजा स्त्रियाम् ।

( ८ ) अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे । क्लीव पद्मे' इति मेदिनी । ( ९ ) आत्मीयादौ नित्ये च निजं त्रिषु । ( १० ) आत्मनि क्षेत्रज्ञः पुंसि, कुशले वाच्यलिङ्गक ।

संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ॥३४॥

❁ इति जान्ता. ❁

काकेभगण्डौ करटौ गजगण्डकटी कटौ ।
शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥३५॥
देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः ।
रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥३६॥
रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे ।

---

(१) सञ्ज्ञा नामनि गायत्र्यां चेतनारवियोषितो'। अर्थस्य सूचनायाञ्च हस्ताद्यैरपि योषिति'इति मेदिनी। (२) 'करटो गजगण्डे स्यात्कुसुम्भे निन्द्यजीवने। एकादशाहादिश्राद्धे दुर्दुरूढेपि वायसे। वाद्यभेदे—' इति मेदिनी। (३) कट श्रोणौ क्रियाकारे कलिञ्जेतिशये शवे। सगये गजगण्डेपि पिप्पल्याञ्च कटी मता'इति विश्व। (४) शिपिविष्टः शिव शौरिर्दुश्चर्मा खलतिस्तथे'ति मेदिनी। (५) 'त्वष्टा पुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपी'ति मेदिनी। (६) 'दिष्टं दैवे पुमान्काले'इति मेदिनी। (७) कटु' स्त्री कटुरोहिण्यां लताराजिकयोरपि। नपुंसकमकार्ये स्यात्पुल्लिङ्गो रसमात्रके ॥ त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेपि खरेपि चे'ति मेदिनी। (८) 'रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले'इति मेदिनी। (९) अरिष्टो लशुने निम्बे फेनिले काककङ्कयो। अरिष्टमशुभे तक्रे सूतिका-

[1]मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥३७॥
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ।
[2]सूक्ष्मैलायां त्रुटिःस्त्रीस्यात्कालेऽल्पे संशयेऽपि सा
[3]अत्युत्कर्षाश्रयः कोट्यो [4]मूले लग्नकचे जटा ।
[5]व्युष्टिः फले समृद्धौ च [6]दृष्टिर्ज्ञानेऽक्षिणदर्शने ३९
[7]इष्टिर्यागेच्छयोः [8]सृष्टं निश्चिते बहुनि त्रिषु ।
[9]कष्टे तु कृच्छ्रगहने [10]दक्षामन्दागदेषु च ॥४०॥

गार आसवे । शुभे मरणचिह्ने चे'ति मेदिनी । ( १ ) माया = शाम्बरी, [ जादू ] यन्त्रं = मूषकादिबन्धन [चूहे आदि पकड़ने का पिंजड़ा] कैतवं = कपटं । अयोघने = यत्र सस्थाप्य लोहादे· कुट्टन भवति तत्र । सीराङ्गे = हलाबयवे— फालाधारे । ( २ ) 'त्रुटिः स्त्री सशये स्वल्पे सूक्ष्मैलाकालमानयो'रिति मेदिनी । ( ३ ) कोटिः स्त्री धनुषोऽग्रेऽश्रौ सख्याभेदप्रकर्षयो' रिति मेदिनी । ( ४ ) 'जटा लग्नकचे मूले मास्यां, प्लक्षे पुनर्जटी'इति मेदिनी । ( ५ ) समृद्धिफलयोर्व्युष्टिः । ( ६ ) ज्ञानाक्षिदर्शनेषु दृष्टिः । (७) दृष्टिर्मताभिलापेपि संग्रहश्लोकयागयोः'इति मेदिनी । (८) 'मुक्तनिर्मितयोः प्राज्ये त्रिपु सृष्टन्तु निश्चिते'इति रुद्रः । ( ९ ) कृच्छ्रगहनस्थानयो. कष्टम् । (१०) पटुर्दक्षे च नीरोगे चतुरेप्यभिधेयवत् । पटोले तु पुमान्क्लीबे छत्रा

पट्टद्वौ वाच्यलिङ्गौ च—

❀ इति टान्ताः ❀

—नीलकण्ठः[1] शिवेऽपि च ।

पुंसि[2] कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ॥४१॥

निष्ठा[3] निष्पत्तिनाशान्ताः काष्ठोत्कर्षे[4] स्थितौ दिशि

त्रिषु[5] ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाल्पयोः[6]

दण्डोऽस्त्री[7] लगुडेऽपि स्याद्गुडो[8] गोलेक्षुपाकयोः ।

---

ल्वणयोरपी'ति मेदिनी । द्वौ = कष्टपट्ट—वाच्यलिङ्गौ । (१) 'नीलकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने । सितापाङ्गे हरे पीनसारके कालकण्ठवत् ।' इति विश्व । (२) 'कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य चे'ति मेदिनी । (३) 'निष्ठा निष्पत्तिनाशान्तयाच्यानिर्वहणेषु चे'ति मेदिनी । (४) काष्ठा दारुदरिद्रायां कालमानप्रकर्षयो । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्—'इति मेदिनी । (५) 'ज्येष्ठः श्रेष्ठे च वृद्धे च त्रिषु मासान्तरे पुमान् । ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयो'रिति मेदिनी । (६) 'कनिष्ठोऽतियुव त्यल्पानुजे स्त्री दुर्बलाङ्गुलौ'इति मेदिनी । (७) दण्डो यमे मानभेदे लगुडे दमसैन्ययो. । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि । अभिमाने ग्रहे दण्डश्चण्डांशो पारिपार्श्विके'इति विश्व । (८) 'गुड स्याद्गोलके हस्तिसनाहेक्षुविकारयो । गुडा स्नुह्याथ कथिता

सर्पमांसात्पशू व्याडौ गोभूवाचास्त्विडा इलाः ४२

क्ष्वेडा वंशशलाकाऽपि नाडी नालेऽपि षट्क्षणे।

काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ॥४३॥

स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने।

ॐ इति डान्ताः ॐ

भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ॥४४॥

गुडिकायाञ्च योषिति' इति मेदिनी। (१) व्याडो व्याघ्रे खले सर्पे' इति रभसः। व्यालोपि। (२) '—इडा तु बुधयोषिति सौरभेय्याञ्च वचने वसुमत्यामपि स्त्रियाम्। इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि चे'ति मेदिनी। (३) क्ष्वेडा वंशशलाकाया सिंहनादे च योषिति। लोहिताकंपर्णफले घोषपुष्पे नपुंसकम्। दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्त्तितः। ध्वनौ विषे-कर्णरोगे क्ष्वेडः—इति मेदिनी। (४) '—नाडीनाले व्रणान्तरे। शिरायां गण्डदूर्वायां चर्यायां कुहनस्य। तथा षट्क्षणकालेपि' इति मेदिनी। (५) 'काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयो। कुत्सिते वृक्षभिन्नाडो वृन्दे रहसि न स्त्रियाम्' इति मेदिनी। (६) 'भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः' इति मेदिनी। (७) भृशे प्रतिज्ञायाञ्च बाढम्। (८) दृढे कृच्छ्रे प्रगाढं स्या'दिति धरणि.।

[1]शक्तस्थूलौ त्रिषु दृढौ [2]व्यूढौ विन्यस्तसंहतौ ।

ॐ इति ढान्ताः ॐ

[3]भ्रूणोऽर्भके स्त्रैणगर्भे [4]बाणो बलिसुते शरे ॥४५॥
[5]कणोऽतिसूक्ष्मे धान्यांशे सं[6]घाते प्रमथे गणः ।
[8]मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः ॥
[9]निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥४७

---

( १ ) दृढः स्थूले नितान्ते च प्रगाढे बलवत्यपी'ति मेदिनी । ( २ ) व्यूढः संहतविन्यस्ते पृथुलेप्यभिधेयवत्'इति मेदिनी । ( ३ ) भ्रूणः स्त्रीगर्भडिम्भयोरिति मेदिनी । (४) बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयो । बाणा तु बाणमूले स्त्री नीलझिण्ट्या पुनर्द्वयो.' इति मेदिनी । ( ५ ) 'कणाजीरककुम्भीरमक्षिकापिप्पलीषु च । कणोऽतिसूक्ष्मे धान्यांशे—'इति मेदिनी । ( ६ ) 'गणः स्यात्प्रमथे संघे सख्यासैन्यप्रभेदयो' रिति मेदिनी । ( ७ ) 'पणो माने वराटानां मूल्ये कार्षापणे धने । द्यूते विक्रय्यशाकादेर्बद्धमुष्टौ ग्लहे भृतौ'इति धरणि । ( ८ ) 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु । शुक्लादावपि बुद्ध्याद्य'इति मेदिनी । ( ९ ) 'क्षणो व्यापारशून्यत्वमुहूर्त्तोत्सवपर्वसु' इति रुद्र. ।

[1] वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे ।
[2] अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ॥४८
[3] स्थाणुः शर्वेऽप्यथ द्रोण[4]ः काकेऽप्याजौ [5] रवे रणः ।
[6] ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ॥४९॥
[7] ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ।
[8] हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥५०

---

( १ ) वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेखने' इति मेदिनी । ( २ ) अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ । निश्शब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु' इति मेदिनी । ( ३ ) '—स्थाणुः—कीले हरे पुमान् । अस्त्री ध्रुवे—' इति मेदिनी । ( ४ ) 'द्रोणोऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्या गवादन्यामपीष्यते' इति मेदिनी । ( ५ ) रणः कोणे क्वणे पुंसि समरे पुंनपुंसक'मिति मेदिनी । (६) 'ग्रामणीभोगिके पत्यौ प्रधाने नापितेपि चे'ति मेदिनी । [भौगिक = ठाकुर नम्बरदार]। ( ७ ) ऊर्णा मेषादिलोम्नि स्यादन्तरावर्तके भ्रुवो'रिति मेदिनी । (८) 'हरिणी हरितायाञ्च नारीभिदुवृत्तभेदयो । सुवर्णप्रतिमायाञ्च—' इति मेदिनी ।

[1]त्रिषु पाण्डौ च हरिणः [2]स्थूणा स्तम्भेऽपि वेश्मनः।
[3]तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे [4]घृणे ॥५१॥
[5]वणिक्पथे च विपणिः [6]सुरा प्रत्यक् च वारुणी।
[7]करेणुरिभ्यां स्त्री नेभे [8]द्रविणं तु बलं धनम् ॥५२॥
[9]शरणं गृहरक्षित्रोः श्रीपर्णं[10] कमलेऽपि च।
[11]विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥५३॥

---

(१) हरिणः पुंसि सारङ्गे शबले त्वभिधेयवन्'इति मेदिनी। (२) स्थूणा· स्यात्सूर्म्यां स्तम्भेऽपि वेश्मन 'इति मेदिनी। ( ३ ) तृष्णा स्यात्तर्षलिप्सयो-रिति मेदिनी। ( ४ ) घृणा जुगुप्साकृपयो'रिति मेदिनी।

( ५ ) 'आपणे पण्यवीथ्याश्च पण्ये च विपणिः स्त्रियाम्'इति रुद्र। ( ६ ) 'वारुणी गण्डदूर्वायां प्रतीचीसुरयो स्त्रियाम्'इति मेदिनी। (७) 'करेणुर्गजयोषायां स्त्रिया पुंसि मतङ्गजे'इति मेदिनी। (८) 'द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे'इति मेदिनी। ( ९ ) 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपी'ति मेदिनी। (१०) 'श्रीपर्णी कुम्भीगम्भार्यो क्लीबे पद्माग्निमन्थयो'रिति रभस.। (११) 'तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके। क्लीब यवाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु'इति मेदिनी।

[1]प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।
[2]करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ॥५४॥
[3]प्राण्युत्पादे संसरणमसम्बाधचमूगतौ ।
घण्टापथेऽथ [4]वान्तान्ने समुद्गिरणमुन्नये ॥५५॥
अतस्त्रिषु [5]विषाणं स्यात्पशुशृङ्गेभदन्तयोः ।
[6]प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ॥५६॥

---

(१) 'प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि । इयत्तायाश्च हेतौ च क्लीबैकत्वे प्रमातरि'इति मेदिनी । (२) 'करणं कारणे काये साधनेन्द्रियकर्मसु । कायस्थे व्रतबन्धे च नाट्यगीतप्रभेदयो । पुमान् शूद्राविशोः पुत्रे वानरादौ च कीर्त्यते ॥' इत्यनय । ( ३ ) 'अथ संसरणं क्लीबमसम्बाधचमूगतौ'इति मेदिनी । ( ४ ) 'भुक्तोज्झितोन्मूलितयोः स्यादुद्धरणमुन्नये'इति रभस. । अतः = इत आरभ्य ईरिणशब्दपर्यन्त, त्रिषु = वाच्यलिंगाः । स्वतस्त्रिषु—इति पठित्वा,—'स्वत एव,–नतु वाच्यलिङ्गतया—त्रिलिङ्गो विषाणशब्द'इत्यर्थमाह स्वामी । ( ५ ) 'विषाणं—त्रिषु शृ गेभदन्तयो.'इति मेदिनी । ( ६ ) प्रवणो ना चतुष्पथे । क्रमनिम्नमहीभागोदारप्रह्वेषु च त्रिषु'इति मेदिनी ।

[1]संकीर्णौ निचिताशुद्धा[2]विरिणं शून्यमूषरम् ।
[ सेतौ [3]च वरणो वेणी [4]नदीभेदे कचोच्चये ]

❀ इति णान्ताः ❀

[5]देवसूर्यौ विवस्वन्तौ [6]सरस्वन्तौ नदार्णवौ ॥५७॥
[7]पक्षिताक्ष्यौ गरुत्मन्तौ [8]शकुन्तौ भासपक्षिणौ ।
[9]अग्न्युत्पातौ धूमकेतू [10]जीमूतौ मेघपर्वतौ ॥५८॥
[11]हस्तौ तु पाणिनक्षत्रे [12]मरुतौ पवनामरौ ।

---

( १ ) 'संकीर्णं सकटे व्याप्ते कुत्रचिद्वर्णसंकरे' इत्यमर. । ( २ ) 'ईरिण- न्तूषरे शून्ये इति मेदिनी । ह्रस्वादिरप्ययम् । ( ३ ) सेतौ प्राकारे च वरण । ( ४ ) नदीभेदे केशसमूहे च वेणी । ( ५ ) 'विवस्वांस्तु सुरे सूर्ये' इति मेदिनी । ( ६ ) सरस्वांस्तु नदे चाब्धौ नान्यवद्रसिके स्त्रियाम् । वाणी- स्त्रीरत्न-वाग्देवी गो नदीषु नदीभिदि' इति मेदिनी । ( ७ ) द्वयोर्गरुत्मान् । ( ८ ) 'भासो भासि समाख्यातो गोष्ठकुक्कुटगृध्रयो' रिति विश्व । (९) 'धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयो' रिति विश्व. । (१०) 'जीमूतोऽद्रौ धृतिकरे देवताले पयोधरे' इति मेदिनी । (११) हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते–' इति मेदिनी । (१२) 'मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' इति मेदिनी ।

[1]यन्ता हस्तिपके सूते [2]भर्ता धातरि पोष्टरि ॥५९॥
[3]यानपात्रे शिशौ पोतः [4]प्रेतः प्राण्यन्तरे मृते ।
[5]ग्रहभेदे ध्वजे केतुः [6]पार्थिवे तनये सुतः ॥६०॥
[7]स्थपतिः कारुभेदेऽपि [8]भूभृद्भूमिधरे नृपे ।
[9]मूर्धाभिषिक्तो भूपेऽपि [10]ऋतुः स्त्रीकुसुमेऽपि च ॥
[11]विष्णावप्यजिताव्यक्तौ [12]सूतस्त्वष्टरि सारथौ ।

(१) यन्ता हस्तिपके सूते' इति मेदिनी । (२) भर्त्ता स्वामिनि पुंसि स्यात्त्रिषु धातरि पोष्टरी'ति मेदिनी । (३) 'पोतः शिशौ वहित्रे च गृहस्थाने च वाससी'ति मेदिनी । (४) प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' इति मेदिनी । (५) केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि' इति मेदिनी । (६) सुतः स्यात्पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता' इति मेदिनी । (७) 'स्थपतिः कञ्चुकिन्यपि । जीवेष्टियाजके शिल्पिभेदे ना सत्तमे त्रिषु' इति मेदिनी । (८) पर्वतराजो भूभृत् । (९) मूर्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि चे'ति मेदिनी । (१०) 'ऋतुर्मासि वसन्तादौ धीरे स्त्री कुसुमेपि चे'ति धरणिः । (११) 'अजितो नाहरौ त्रिषु । अनिर्जिते च–' इति विश्वः । अव्यक्तः शङ्करे विष्णावव्यक्त महदादिके । आत्मन्यपि स्यादव्यक्त मस्फुटे त्वभिधेयवत् ।' इति विश्व' (१२) सूतस्तु सारथौ तक्षिण क्षत्रियाद्ब्राह्मणी

[1]व्यक्तः प्राज्ञेऽपि [2]दृष्टान्तावुभे शास्त्रनिदर्शने ॥६२
[3]क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायाञ्च शूद्रजे ।
[4]वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ६३
[5]आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः ।
[6]कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥६४॥
[7]श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः ।
इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः॥६५
[8]कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे ।

---

सुते। वन्दिपारदयो पुंसि प्रसूने प्रेरिते त्रिषु' इति मेदिनी। (१) 'व्यक्तः स्फुटमनीषिणो'रितिमेदिनी। (२) 'दृष्टान्त उदाहृतौ। शास्त्रे न' मरणे' इति मेदिनी। (३) क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्या तनये क्षत्ताभियुक्ते च प्रजासृजि' इति विश्व'। (४) 'वृत्तान्तोवसरे भावे कार्त्स्न्यवार्त्ताविशेषयो। प्रा।त्यायार्थे'ति विश्व। (५) 'आनर्त्तो देशभेदेपि नृत्यस्थाने जनेरणे' इति मेदिनो। (६) यमादिषु—कृतान्तः। (७) कफ-पित्तादि, रसरक्तमांसादि, पञ्चभूतानि पृथिव्यादीनि, रूपरसादयस्तद्गुणा, इन्द्रियाणि, गैरिकादिपाषाणभेदाः, भूवादयश्च—धातव (८) 'शुद्धान्तोऽन्त पुरे गृह्यकक्षाभेदे च भूपते' इत्यजय।

[1]अस्त्रसामर्थ्ययोः शक्तिर्[2]मूर्तिः काठिन्यकाययोः ६६

[3]विस्तारवल्ल्योर्व्रततिर्[4]वसती रात्रिवेश्मनोः ।

[5]क्षयार्चयोरपचितिः [6]सातिर्दानावसानयोः ॥६७॥

[7]अर्तिः पीडाधनुष्कोट्योर्[8]जातिः सामान्यजन्मनोः ।

[9]प्रचारस्यन्दयो रीतिरीतिर्[10]डिम्बप्रवासयोः ॥६८॥

[11]उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये [12]युगे ।

---

(१) 'शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्'—इति मेदिनी। (२) काठिन्यकाययोर्मूर्त्तिः। (३) विस्तारे लतायां च व्रततिः। (४) 'वसतिः स्यात्स्त्रियां वासे, यामिन्यां च निकेतने'—इति मेदिनी। (५) 'भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु'—इति मेदिनी। (६) दानावसानयोः सातिः। (७) पीडायां धनुषः कोटौ च—अर्त्तिः। (८) 'जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः। जातिर्जातीफले धात्र्यां चुल्लीकाम्पिल्लयोरपी'ति विश्वः। (९) 'रीतिः प्रचारे स्यन्दे च लोहकिट्टारकूटयो'रिति विश्वः। (१०) ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रिया'मिति मेदिनी। (११) 'प्राप्तिर्लाभे महोदये'। (१२) युगभेदेऽग्नित्रये त्रेता।

वीणाभेदेऽपि महती[1] भूतिर्[2]भस्मनि संपदि ॥६९॥
[3]नदीनगर्योर्नागानां भोगवत्यथ सङ्गरे ।
सङ्गे सभायां समितिः[4] क्षयवासावपि क्षितिः[5]॥७०
[6]रवेरर्चिश्च शास्त्रं च वह्निज्वाला च हेतयः ।
[7]जगती जगति च्छन्दोविशेषेऽपि क्षितावपि ॥७१
[8]पङ्क्तिश्छन्दोऽपि दशमं स्यात्प्रभावेऽपि [9]चायतिः
[10]पंक्तिर्गतौ च [11]मूले तु पक्षतिः पक्षभेदयोः ॥७२॥

(१) 'महती वल्लकी भेदे प्राज्ये तु स्यान्नपुंसकम् । वरस्भेदे पुमान् वड्रे वाच्यवत्-' इति मेदिनी। (२) 'भूतिर्भस्मनि सम्पत्तिहस्तिश्रृङ्गारयो स्त्रियाम्' इति मेदिनी। (३) अथ भोगवती नागपुरीनद्योरह्वौ पुमान् इति मेदिनी। (४) युद्धमङ्गसगास्तु—समितिः। (५) क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम्' इति मेदिनी। (६) हेतिः स्यादायुधज्वाला-सूर्यतेज सुयोषिती'तिमेदिनी। (७) 'जगती भुवने क्ष्मायां छन्दोभेदे जनेपि चे'ति मेदिनी। (८) 'पङ्क्तिर्दशाक्षरच्छन्दोदशसङ्ख्यादिषु स्त्रियाम्'-इति मेदिनी। ( ९ ) 'आयति. संयमे दैर्घ्ये प्रभावागामिकालयो'रिति विश्व.। (१०) 'पत्तिर्ना पदगे स्त्रियाम्। गतावेकरथैकेभत्र्यश्वपञ्चपदातिके' इतिमेदिनी। (११) पक्षतिस्तुभवेत्पक्षमूले च प्रतिपत्तिथौ' इति मेदिनी।

[1]प्रकृतिर्योनिलिङ्गे च [2]कौशिक्याद्याश्च वृत्तयः ।
[3]सिकताः स्युर्वालुकापि वेदे श्रवसि च [4]श्रुतिः ॥७३
[5]वनिता जनितात्यर्थानुरागायां च योषिति ।
[6]शुषिः क्षितिव्युदासेऽपि [7]धृतिर्धारणधैर्ययोः ॥७४॥
[8]बृहती क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ।
[9]वासिता स्त्रीकरिण्योश्च [10]वार्ता वृत्तौ जनश्रुतौ ॥७५

---

(१) प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयो । योनौ लिङ्गे पौरवर्गे–' इतिमेदिनी । (२) 'वृत्तिर्विवरणे जीव्ये कैशिक्यादिषु चेष्यते' इति विश्वः । (३) 'सिकता स्त्री सिकतिले वालुकायान्तु भूम्नी'तिमेदिनी । (४) 'श्रुतिः श्रोत्रे तथाम्नाये वार्त्तायां श्रोत्रकर्मणी'ति विश्व । (५) 'वनिता जातरागस्त्रीस्त्रियो' स्त्री त्रिषु याचिते' इतिमेदिनी । (६) 'शुषिः कारा च रन्ध्रा च दीर्णश्च विवरं भुवः'–इति शाश्वतः । (७) 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्व. । (८) 'वृहती क्षुद्रवार्ताक्यां कण्टकार्यांश्च वाचि च । वारिधन्यां महत्याश्च च्छन्दोवसनभेदयो' रिति विश्वः । (९) 'वासिता करिणीनार्योर्वासितं भाविते रुते' इति मे० । (१०) वार्त्तावार्तिङ्गणे वृत्तौ वार्त्तारुप्याद्युदन्तयो. । वृत्तिमन्नीरुजोर्वार्त्तेति विश्वः ।

[1]वार्तं फल्गुन्यरोगे च त्रि[2]ष्वप्सु च घृतामृते ।
[3]कलधौतं रूप्यहेम्नो[4]र्निमित्तं हेतुलक्ष्मणोः ॥७६॥
[5]श्रुतं शास्त्रावधृतयो[6]र्युगपर्याप्तयोः कृतम् ।
[7]अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥७७
[8]युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु ।
[9]वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥७८॥
[10]महद्राज्यं चा[11]वगीतं जन्ये स्याद्गर्हिते त्रिषु ।

---

(१) वार्तमारोग्यफल्गुनोरिति विश्व.। (२) 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते। अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः' इति मेदिनी। (३) 'कलधौतं सुवर्णे स्याद्रजते च नपुंसक'मिति मे०। (४) हेतुचिह्नयोर्निमित्तम्। (५) श्रवणशास्त्रयो. श्रुतम्। (६) 'कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु' इति मेदिनी। (७) महाभीतौ जीवनानपेक्षिकर्मणि चात्याहितम्। [ जान पर खेल जाना ]। (८) 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीब त्रिषूचिते। प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना। कुमारेऽपीति मेदिनी। (९) वृत्तोऽधीतेऽप्यतीतेऽपि वर्तुलेपि मृते वृते। वृत्तोऽन्यलिङ्गं वा क्लीबे छन्दश्चारित्रवृत्तिषु' इति मेदिनी। (१०) राज्ये महदादौ महत्। (११) 'अवगीतस्तु निर्वादे दुष्टगर्हितयोरपी'ति मेदिनी।

[1]श्वेतं रूप्येऽपि [2]रजतं हेम्नि रूप्ये सिते त्रिषु ॥७९
त्रिष्वतो [3]जगदिङ्गेऽपि [4]रक्तं नील्यादिरागि च ।
[5]अवदातः सिते पीते शुद्धे [6]बद्धार्जुनौ सितौ ॥८०
[7]युक्तेऽतिसंस्कृते मर्षिण्यभिनीतोऽथ [8]संस्कृतम् ।
कृत्रिमे लक्षणोपेतेऽप्य[9]नन्तोऽनवधावपि ॥८१॥
[10]ख्याते हृष्टे [11]प्रतीतोऽभिजातस्तु कुलजे बुधे ।

---

(१) रूप्यादिषु श्वेतम् । (२) 'रजतं रञ्जने रूप्ये शोणिते हृदहारयो'रित्यजयः । तान्तवर्गसमाप्तिं यावत् त्रिषु । (३) जगत्स्याद्विष्टपे क्लीब वायौ ना जङ्गमे त्रिषु' इति मे० । (४) 'रक्तोऽनुरक्ते नीलादिरञ्जिते लोहिते त्रिषु । क्लीबन्तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि' इति मेदिनी । (५) शुद्धादाववदातः । (६) बद्धाश्वसितधवलेषु सितः । (७) युक्तातिसंस्कृतक्षमाशालिषु–अभिनीतः । (८) 'संस्कृतः कृत्रिमे शस्ते भूषितेऽप्यन्यलिङ्गक । क्लीबन्तु लक्षणोपेते—' इति मेदिनी । (९) 'अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु' इति मेदिनी । (१०) 'प्रज्ञातज्ञातहृष्टेषु प्रतीतः सादरे त्रिषु' इति मेदिनी । (११) 'अभिजातः कुलीने स्यान्न्याय्यपण्डितयो स्त्रिषु' इति मेदिनी ।

विविक्तौ[1] पूतविजनौ मूर्च्छितौ[2] मूढसोच्छ्रयौ ८२
द्वौ चाम्लपरुषौ[3] शुक्तौ शितौ[4] धवलमेचकौ ।
सत्ये[5] साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ८३
पुरस्कृतः[6] पूजितेऽरात्यभियुक्तेऽग्रतः कृते ।
निवातावाश्रयावातौ[7] शस्त्राभेद्यं च वर्म यत् ८४
जातोन्नद्धप्रवृद्धाः[8] स्युरुच्छ्रिता उत्थितास्त्वमी[9] ।
वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ[10] सादरार्चितौ ॥८५॥

॥ इति तान्ताः ॥

---

(१) विविक्तं त्रिष्वसपृक्ते रहः पूतविवेकिषु'—इति मेदिनी । (२) 'मूर्छितमपि सोच्छ्रये मूढे' इवि मेदिनी । (३) 'शुक्तं पूताम्लनिष्ठुरे' इति मेदिनी । (४) निशितेपि शितिर्भूर्जे नासितामितयोस्त्रिषु' इति मेदिनी । ( ५ ) 'सन् साधौ धीरशस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युमयो स्त्रियाम्' इति मेदिनी । (६) 'पुरस्कृतोऽभिशस्तारिग्रस्ताग्रेकृतपूजिते' इनि मेदिनी । (७) 'निवातो दृढसन्नाहे निवासे वातवर्जिते' इति मे० । ( ८ ) 'उच्छ्रितं त्रिषु सञ्जाते समुन्नद्धप्रवृद्धयो'रिति मेदिनी । ( ९ ) 'उत्थितं स्यात्त्रिषूत्पन्ने प्रोद्यते वृद्धिमत्यपि' इति मेदिनी । (१०) सादरार्चितयोरादृतः ।

[1]अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।
[2]निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ ॥८६॥
[3]समर्थस्त्रिषु शक्तिस्थेऽसंबद्धार्थे हितेऽपि च ।
[4]दशमीस्थौ क्षीणरागवृद्धौ [5]वीथी पदव्यपि ॥८७॥
[6]आस्थानीयत्नयोरास्था [7]प्रस्थोऽस्त्री सानुमानयोः ।
[[8]शास्त्रद्रविणयोर्ग्रन्थः [9]संस्थाधारे स्थितौ मृतौ ।]

ॐ इति थान्ताः ॐ

[10]अभिप्रायवशौ छन्दाव[11]ब्दौ जीमूतवत्सरौ ॥८८॥
[12]अपवादौ तु निन्दाऽऽज्ञे [13]दायादौ सुतबान्धवौ ।

---

(१) अभिधेयादिष्वर्थः । (२) निपान = जलावतार, जुष्टं = सेवितम् । जलाशयादिषु तीर्थम् । (३) शक्तिमदादिषु समर्थः । (४) नष्टवीर्यादौ दशमीस्थः । (५) वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः' इति मेदिनी । (६) 'आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिती'ति मेदिनी । (७) 'प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि' इति मे० । (८) द्वयोर्ग्रन्थः । (९) त्रिषु संस्था । (१०) द्वयोश्छन्दः । (११) द्वयोरब्दः । (१२) द्वयोरपवादः । (१३) द्वयोर्दायादः ।

[1]पादा रश्म्यङ्घ्रितुर्यांशाश्[2]चन्द्राग्न्यर्कास्तमोनुदः
[3]निर्वादो जनवादेऽपि [4]शादो जम्बालशष्पयोः।
[5]आरावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ॥९०॥
[6]स्यात्प्रसादोऽनुरागेऽपि [7]सूदः स्याद्व्यञ्जनेऽपि च।
[8]गोष्ठाध्यक्षेऽपि गोविन्दो [9]हर्षेऽप्यामोदवन्मदः ॥
[10]प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्।
स्त्री संवि[11]ज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥
[12]धर्मे रहस्युपनिषत्स्या[13]दृतौ वत्सरे शरत्।

(१) त्रिपु—पादः। (२) त्रिपु—तमोनुत्। (३) 'निर्वादो लोकवादेपि परिनिष्ठितवादयो'रिति मे०। (४) द्वयो.शाद'। (५) चतुर्पु—आक्रन्दः। (६) प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिपु' इति मेदिनी। (७) सूपकारव्यञ्जनयो. सूदः। (८) गोविन्दो वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ' इति मेदिनी। (९) 'आमोदो गन्धहर्पयो' इति—मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयो'रिति विश्व.। (१०) त्रिपु ककुद.। (११) सभापा = संभाषणम्। क्रियाकारः = कर्मनियम, पणवन्धो वा, आजि = युद्धम्। (१२) 'उपनिपत्स्त्र भवेद्धर्मे वेदान्ते विजने स्त्रियाम्' इति मेदिनी। (१३) द्वयो. शरत्।

[1]पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥१३॥
[2]गोष्पदं सेविते माने [3]प्रतिष्ठाकृत्यमास्पदम् ।
त्रिष्विष्ट[4]मधुरौ स्वादू [5]मृदू चातीक्ष्णकोमलौ ॥१४
[6]मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ [7]तु शारदौ ।
प्रत्यग्राप्रतिभौ [8]विद्वत्सुप्रगल्भौ विशारदौ ॥१५॥

॥ इति दान्ताः ॥

[9]व्यामो वटश्च न्यग्रोधा[10]वुत्सेधः काय उन्नतिः ।
[11]पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥१६॥
[12]परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
[13]बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ॥१७॥

---

(१) षट्सु व्यवसितादिषु पदम् । (२) द्वयोर्गोष्पदम् । (३) द्वयोरास्पदम् । (४) इष्टमधुरयोः स्वादु—त्रिषु । (५) द्वयोर्मृदुः । (६) चतुर्षु—मन्दः । (७) नवीन—प्रतिभाशून्ययोः शारदः । (८) पण्डितप्रवीणयोर्विशारदः । (९) द्वयोर्न्यग्रोधः । (१०) द्वयोरुत्सेधः । (११) मार्गादौ विवधवीवधौ । पर्याहारः = उभयतोबद्धशिक्य काष्ठं [बहंगी] । (१२) यज्ञियवृक्षशाखादौ—परिधिः । (१३) बन्धकादिष्वर्थेष्वाधिः ।

[1]स्युः समर्थननीवाकनियमाश्च समाधयः ।
[2]दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ॥९८॥
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।
[3]विधुर्विष्णौ चन्द्रमसि [4]परिच्छेदे बिलेऽवधिः ॥९९॥
[5]विधिर्विधाने दैवेऽपि [6]प्रणिधिः प्रार्थने चरे ।
[7]बुधवृद्धौ पण्डितेऽपि [8]स्कन्धः समुदयेऽपि च १००
देशे [9]नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।
[10]विधा विधौ प्रकारे च [11]साधू रम्येऽपि च त्रिषु १०१

(१) समर्थनादिषु समाधिः । (२) दोषोत्पादादिषु—अनुबन्धः । (३) विष्णुचन्द्रयोर्विधु । (४) परिच्छेदविलयोरवधिः । (५) 'विधिर्ना नियतौ काले विधाने परमेष्ठिनि' इति मे० । (६) 'प्रणिधिर्याचने चरे' इति हैम । (७) 'बुधः—कवौ रौहिणेये' इति—वृद्धो जीर्णे प्रवृद्धे च त्रिषु क्लीबं तु शैलजे' इति च मेदिनी । (८) 'स्कन्धः स्यान्नृपतावसे सपरायसमूहयोः । काये तरुप्रकाण्डे च भद्रादौ छन्दसो भिदि' इति मे० । (९) 'सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रिया'मिति मे० ।(१०) 'विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधा'विति विश्व ।(११) 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः ।

[1]वधूर्जाया स्नुषा स्त्री च [2]सुधा लेपोऽमृतं स्नुही ।
[3]सन्धा प्रतिज्ञा मर्यादा [4]श्रद्धा संप्रत्ययः स्पृहा १०२
[5]मधु मद्ये पुष्परसे क्षौद्रे[6]ऽप्यन्धं तमस्यपि ।
अतस्त्रिषु [7]समुन्नद्धौ पण्डितम्मन्यगर्वितौ ॥१०३॥
[8]ब्रह्मबन्धुरधिक्षेपे निर्देशे[9]ऽथावलम्बितः ।
अविदूरोऽप्यवष्टब्धः [10]प्रसिद्धौ ख्यातभूषितौ ॥

ॐ इति धान्ताः ॐ

[11]सूर्यवह्नी चित्रभानू [12]भानू रश्मिदिवाकरौ ।
[13]भूतात्मानौ धातृदेहौ मूर्ख[14]नीचौ पृथग्जनौ ॥

---

(१) पत्नीस्नुषास्त्रीषु वधूः । (२) 'सुधा गङ्गेष्टकाचूर्णस्नुही चामृतमूर्वयो'रि यजय । (३) प्रतिज्ञामर्यादयो'—सन्धा । (४) आदर-स्पृहयो. श्रद्धा । (५) मद्यादौ मधु । धान्तसमाप्तिपर्यन्तं त्रिषु । (६) तमस्यप्यन्धम् । (७) पण्डितम्मन्यगर्वितयो समुन्नद्धः । (८) अधिक्षेप निर्देशयोर्ब्रह्मबन्धुः । (९) अवलम्बिताविदूरयोरवष्टब्धः । (१०) ख्यातभू-षितयोः प्रसिद्धः । (११) सूर्यवह्न्योश्चित्रभानुः । (१२) रश्मिसूर्ययोर्भानुः । (१३) धातृदेहयोर्भूतात्मा । (१४) मूर्खनीचयोः पृथग्जनः ।

[1]ग्रावाणौ शैलपाषाणौ [2]पत्रिणौ शरपक्षिणौ ।
[3]तरुशैलौ शिखरिणौ [4]शिखिनौ वह्निबर्हिणौ १०६
[5]प्रतियत्नावुभौ लिप्सोपग्रहावथ [6]सादिनौ ।
द्वौ सारथिहयारोहौ [7]वाजिनोऽश्वेषुपक्षिणः १०७
[8]कुलेऽप्यभिजनो जन्मभूम्यामप्यथ [9]हायनाः ।
वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का [10]विरोचनाः ॥
क्लेशेऽपि [11]वृजिनो [12]विश्वकर्मार्कसुरशिल्पिनोः ।
[13]आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥

---

(१) शैलपाषाणयोर्ग्रावा । (२) शरपक्षिणोः पत्री । (३) द्वयोरर्थयोः शिखरी । (४) वह्निमयूरयोः शिखी । (५) प्रतियत्नबन्दीग्रहणयोः प्रतियत्नः । (६) सारथिहयारोहयोः सादी । (७) अश्ववाणपक्षिषु वाजी । (८) जन्मभूकुलयोरभिजनः । (९) अब्द–रश्मि व्रीहिभेदेषु हायनः । (१०) 'विरोचनः प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयो'रिति मेदिनी । (११) 'वृजिनं कल्मषे क्लीवं केशे ना कुटिले त्रिषु' इति रभसः । (१२) 'विश्वकर्मा सहस्रांशौ मुनिभिद्देवशिल्पिनो'रिति मेदिनी । (१३) यत्नादावात्मा ।

[1]शङ्को घातुकमत्तेभो वर्षुकाब्दो घनाघनः ।
[2]घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे ॥११०॥
[3]अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ।
[4]इनः सूर्ये प्रभौ [5]राजा मृगाङ्के क्षत्रिये नृपे १११
[6]वाणिन्यौ नर्तकीदूत्यौ [7]स्रवन्त्यामपि वाहिनी ।
[8]ह्रादिन्यौ वज्रतडितौ [9]वन्दायामपि कामिनी ११२
[10]त्वग्देहयोरपि तनुः [11]सूनाऽधोजिह्विकापि च ।
[12]क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके ११३
मन्देऽथ [13]केतनं कृत्ये केतावुपनिमन्त्रणे ।

---

(१) घातुकादौ घनाघनः । (२) मेघ काठिन्य-मूर्त निरन्तरेषु घनः । (३) दर्पादावभिमानः । (४) सूर्यप्रभयोरिनः । (५) चन्द्रनृपादौ राजा । (६) नर्तकीदूत्योर्वाणिनी । (७) 'वाहिनी स्यात्तरङ्गिण्यां सेना सैन्यभेदयो'रिति विश्व । (८) वज्रविद्युतोर्ह्रादिनी । (९) 'कामिनी भीरुवन्द्योः' । (१०) त्वगादौ तनुः । (११) 'सूना पुत्र्या वधस्थानगलशुण्डिकयो-र्पी'ति विश्वः । (१२) यज्ञादौ वितानं । (१३) कृत्यादौ केतनम् ।

वेद[1]स्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः॥११४॥
[2]उत्साहने च हिंसायां सूचने चापि गन्धनम्।
[3]आतञ्चनं प्रतीवापजवनाप्यायनार्थकम्॥११५॥
[4]व्यञ्जनं लाञ्छनं श्मश्रुनिष्टानावयवेष्वपि।
[5]स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्।
[6]स्यादुद्यानं निःसरणे वनभेदे प्रयोजने।
[7]अवकाशे स्थितौ स्थानं [8]क्रीडादावपि देवनम्॥
[9]उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च।
[10]व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च ११८
मारणे मृतसंस्कारे गतौ द्रव्येऽर्थदापने।

(१) वेदादौ ब्रह्म, विप्रादौ ब्रह्मा। (२) उत्साहनादौ गन्धनम्। (३) प्रतीवाप = द्रुतधातौ द्रव्यान्तरादिनिक्षेपः [ जारण ]। जवनं = वेग। आप्यायन = तर्पणम्। (४) लाञ्छनादौ व्यञ्जनम्। (५) लोकवादादौ कौलीनम्। (६) निःसरणादावुद्यानम्। (७) स्थित्यवकाशयोः स्थानम्। (८) क्रीडा[illegible]दौ देवनम्। (९) पौरुषादावुत्थानम्। (१०) प्रतिरोधादौ व्युत्थानम्।

निर्वर्तनोप[1]करणानुव्रज्यासु च साधनम् ॥११९॥
नि[2]र्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ।
[3]व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ॥१२०॥
[4]पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि
तिथिभेदे [5]क्षणे पर्व [6]वर्त्म नेत्रच्छदेऽध्वनि ॥१२१॥
[7]अकार्यगुह्ये कौपीने [8]मैथुनं संगतौ रते ।
[9]प्रधानं परमात्मा धीः [10]प्रज्ञानं बुद्धिचिह्नयोः ॥१२२॥
[11]प्रसूनं पुष्पफलयो[12]र्निधनं कुलनाशयोः ।
[13]क्रन्दने रोदनाह्वाने [14]वर्ष्म देहप्रमाणयोः ॥१२३॥
[15]गृहदेहत्विट्प्रभावा धामान्यथ [16]चतुष्पथे ।

---

( १ ) मारणादौ साधनम् । (२) वैरशुद्ध्यादौ निर्यातनम् । (३) विपदादौ व्यसनम् । (४) अक्षिलोमादौ–पक्ष्म । [रोंआँ] (५) क्षणादौ पर्व (६) नेत्रच्छदादौ वर्त्म । (७) अकार्यगुह्ययोः कौपीनम् । (८) सङ्गतिसुरतयो मैथुनम् । (९) परमात्मादौ प्रधानम् । (१०) बुद्ध्यादौ प्रज्ञानम् । (११) पुष्पादौ प्रसूनम् । (१२) कुलनाशयोर्निधनम् । (१३) रोदनादौ क्रन्दनम् (१४) देहादौ वर्ष्म । (१५) गृहादौ धाम । (१६) चतुष्पथादौ संस्थानम्

संनिवेशे च संस्थानं लक्ष्म[1] चिह्नप्रधानयोः॥१२४
[2]आच्छादने संपिधानमपवारणमित्युभे ।
[3]आराधनं साधने स्यादवाप्तौ तोषणेऽपि च ॥१२५
[4]अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।
[5]रत्नं स्वजातिश्रेष्ठेऽपि [6]वने सलिलकानने ॥१२६॥
[7]तलिनं विरले स्तोके वाच्यलिङ्गं तथोत्तरे ।
[8]समानाःसत्समैके स्युः पिशुनौ[9] खलसूचकौ ॥१२७
[10]हीनन्यूनावूनगर्ह्यौ वेगिशूरौ[11] तरस्विनौ ।
[12]अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि॥१२८॥

❀ इति नान्ताः ❀

---

(१) चिह्नादौ लक्ष्म । (२) संपिधानावाच्छादनम् । (३) साधनादावाराधनम् । (४) रथचक्रादावधिष्ठानम् । (५) स्वजातिश्रेष्ठे मण्यादौ च रत्नम् । (६) सलिलादौ वनम् । (७) विरलादौ तलिनम् । तलिनाद्यान्तवर्गसमाप्तिपर्यन्तं वाच्यलिङ्गा । (८) तत्समादौ समानम् । (९) खलसूचकयोः पिशुनम् । (१०) न्यूनगर्ह्ययोर्हीनन्यूनौ । (११) वेगिशूरयोस्तरस्वी । (१२) अपराद्धादावभिपन्नः ।

[1]कलापो भूषणे बर्हे तूणीरे संहतावपि ।
[2]परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ॥१२९॥
गो[3]धुग्गोष्ठपती गोपौ [4]हरविष्णू वृषाकपी ।
[5]बाष्पमूष्माश्रु [6]कशिपु त्वन्नमाच्छादनं द्वयम् ॥१३०
[7]तल्पं शय्याट्टदारेषु [8]स्तम्बेऽपि विटपोऽस्त्रियाम् ।
[9]प्रासरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ॥१३१॥
भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च [10]कच्छपी ।
[ [11]कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेऽशके ]

ॐ इति पान्ताः ॐ

[12]रेवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्यलिङ्गकः ॥

ॐ इति फान्ताः ॐ

---

(१) भूषणादौ कलापः । (२) परिच्छदादौ परीवापः । (३) गोपगोष्ठपत्योर्गोधुक् । (४) विष्णुशिवयोः—वृषाकपिः । (५) ऊष्माश्रुणोर्बाष्पम् । (६) अन्नवस्त्रयो सहोक्तयः कशिपु पुनपुंसकयोः । (७) शय्यादौ तल्पम् । (८) 'विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयो'रिति विश्वः । (९) प्रासरूपादयो बुधरम्ययोः । अमी मेद्यलिङ्गाः । (१०) वीणाभेदकूर्म्यो कच्छपी । (११) मृगरोमपटादौ–कुतपः । (१२) कुत्सितादौ रेफः ।

[1]अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने ।
[2]कम्बुर्ना वलये शङ्खे द्विजिह्वौ सर्प[3]सूचकौ ॥१२३॥
[4]पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान् ।

❀ इति वान्ताः ❀

[5]कुम्भौ घटेभमूर्धांशौ [6]डिम्भौ तु शिशुबालिशौ
[7]स्तम्भौ स्थूणाजडीभावौ [8]शम्भू ब्रह्मत्रिलोचनौ ।
[9]कुक्षिभ्रूणार्भका गर्भा [10]विस्रम्भः प्रणयेऽपि च ॥१२४
[11]स्याद्भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम्
[12]स्यान्महारजने क्लीबं कुसुम्भं करके पुमान् ॥१२५

---

( १ ) अश्वादौ–गान्धर्वः । वान्त एवाय प्रसिद्ध. । ( २ ) वलयादौ कम्बु. । ( ३ ) सर्पसूचकयोर्द्विजिह्वः । (४) पूर्वशब्दः प्राग्वाची वाच्यलिङ्गः, यदा पूर्वजाम् पितामहादीन् आह तदा पुंसि बहुत्वे च ज्ञेय इत्यर्थः । वान्त एवायं प्रसिद्धः । (५) घटादौ कुम्भः । (६) द्वयोर्डिम्भ । (७) द्वयोरर्थयो स्तम्भः । (८) द्वयोः शम्भु. । (९) कुक्ष्यादिषु गर्भः । (१०) 'विस्रम्भः केलिकलहे विश्वासे प्रणये वधे' इति विश्व । (११) भेर्यादौ दुन्दुभिः । (१२) महारजनादौ कुसुम्भशब्द. ।

[1]क्षत्रियेऽपि च नाभिर्ना [2]सुरभिर्गवि च स्त्रियाम् ।
[3]सभा संसदि सभ्ये च [4]त्रिष्वध्यक्षेऽपि वल्लभः ॥

❀ इति भान्ताः ❀

[5]किरणप्रग्रहौ रश्मी [6]कपिभेकौ प्लवङ्गमौ ।
[7]इच्छामनोभवौ कामौ [8]शौर्योद्योगौ पराक्रमौ ॥
[9]धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ।
उपायपूर्व आरम्भ [10]उपधा चाप्युपक्रमः ॥१३९॥
[11]वणिक्पथः पुरं वेदो निगमो [12]नागरो वणिक् ।
नैगमौ द्वौ [13]बलरामो नीलचारुसिते त्रिषु ॥१४०॥

---

( १ ) क्षत्रियरथचक्रपिण्डिकादौ नाभिः । ( २ ) गोचम्पकचैत्रघ्राणतर्पणादौ सुरभिः । ( ३ ) सभ्यसंसदोः सभा । ( ४ ) अध्यक्षदयितादौ वल्लभः। ( ५ ) किरणप्रग्रहयो रश्मिः । ( ६ ) कपिभेकयो.—प्लवङ्गमः । ( ७ ) इच्छामदनयोः कामः । ( ८ ) शौर्योद्योगयोः पराक्रमः । ( ९ ) पुण्यादौ धर्मः । ( १० ) 'उपक्रमः स्यादुपधा चिकित्सारम्भविक्रमे' इति विश्वः [ उपधा = घूस ] ( ११ ) वणिक्पथादौ निगमः । ( १२ ) नागरवणिजौ—नैगमौ । ( १३ ) बलरामपरशुरामसृगादौ—रामः ।

[1] शब्दादिपूर्वो वृन्देऽपि ग्रामः [2] क्रान्तौ च विक्रमः ।
[3] स्तोमः स्तोत्रेऽध्वरे वृन्दे [4] जिह्मस्तु कुटिलेऽलसे ॥
[5] उष्णेऽपि घर्मः [6] श्चेष्टालङ्कारे भ्रान्तौ च विभ्रमः ।
[7] गुल्मा रुक्स्तम्बसेनाश्च [8] जामिः स्वसृकुलस्त्रियोः ॥
[9] क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु
[10] त्रिषु श्यामौ हरित्कृष्णौ [11] श्यामा स्याच्छारिवा निशा
[12] ललामं पुच्छपुण्ड्राश्वभूषाप्रधान्यकेतुषु ।
[13] सूक्ष्ममध्यात्ममप्याद्ये [14] प्रधाने प्रथमस्त्रिषु ॥ १४४ ॥

---

(१) 'ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः' । इति विश्वः । (२) शक्ति सम्पत्ति–कान्त्योर्विक्रमः । ( ३ ) स्तोत्रादौ स्तोमः । ( ४ ) कुटिलालसयो र्जिह्मः । ( ५ ) प्रस्वेदोष्णादौ घर्मः । ( ६ ) चेष्टादौ विभ्रमः । (७) रुजादौ गुल्मः । ( ८ ) भगिनी कुलस्त्रियोर्जामिः । ( ९ ) क्षमातिति क्षा पृथ्वी च योग्ये शक्ते हिते क्षमम्–इति धरणि । (१०) श्यामादिषु श्यामशब्दः । श्यामशब्दः । (११) शारिवादिषु श्यामा । (१२) पुच्छादिषु ललामम् । (१३) अध्यात्मादिषु सूक्ष्मम् । (१४) आदि–प्रधानादिषु–प्रथमः ॥

[1]वामौ वल्गुप्रतीपौ [2]द्वावधमौ न्यूनकुत्सितौ ।
जीर्णं [3]च परिभुक्तं च यातयाममिदं द्वयम् ॥१४५॥

❀ इति मान्ताः ❀

[4]तुरङ्गगरुडौ तार्क्ष्यौ निलया[5]पचयौ क्षयौ ।
[6]श्वशुर्यौ देवरश्यालौ भ्रा[7]तृव्यौ भ्रातृजद्विषौ १४६
[8]पर्जन्यौ रसदब्देन्द्रौ [9]स्यादर्यः स्वामिवैश्ययोः ।
ति[10]ष्यः पुष्ये कलियुगे [11]पर्यायोऽवसरे क्रमे ॥१४७॥
[12]प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ।
रन्ध्रे शब्दे[13]ऽथानुशयो दीर्घद्वेषानुतापयोः ॥१४८॥
[14]स्थूलोच्चयस्त्वसाकल्ये गजानां मध्यमे गते ।

(१) सुन्दरप्रतीपयोर्वामः । (२) न्यूनादिष्वधमः । (३) जीर्णादिषु यातयामम् । (४) तुरङ्गगरुडयोस्तार्क्ष्यः । (५) गृहापचययोः क्षयः । (६) द्वयोरर्थयो श्वशुर्यः । (७) द्वयोरर्थयोर्भ्रातृव्यः । (८) शब्दायमाने मेघे इन्द्रे च पर्जन्यः । (९) द्वयोरर्थयोरर्यः । (१०) द्वयोस्तिष्य. । (११) पर्यायस्त्रिष्वर्थेषु । (१२) स्वधीनादिषु प्रत्यय । (१३) दीर्घद्वेषादावनुशयः । (१४) असाकल्यादौ स्थूलोच्चयः ।

[1]समयाःशपथाचारकालसिद्धान्तसंविदः ॥१४९॥
[2]व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ।
[3]अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि ॥
[4]युद्धायत्योः संपरायः [5]पूज्यस्तु श्वशुरेऽपि च ।
[6]पश्चादवस्थायि बलं समवायश्च संनयौ ॥१५१॥
[7]सङ्घाते संनिवेशे च संस्त्यायः [8]प्रणयास्त्वमी ।
विस्रम्भयाच्ञाप्रेमाणो विरोधेऽपि [9]समुच्छ्रयः ॥
[10]विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ।
[11]निर्यासेऽपि कषायोऽस्त्री [12]सभायां च प्रतिश्रयः

---

( १ ) शपथादौ समयः । ( २ ) व्यसनादिष्वनयः । ( ३ ) अतिक्रमादावत्ययः । (४) आपत्तियुद्धादौ संपरायः । (५) श्वशुरपूजार्हयोः पूज्यः । (६) समवायादौ संनयः । (७) सघातसंनिवेशयोः संस्त्यायः । ( ८ ) त्रिषु प्रणयः । ( ९ ) वैरोन्नत्योः समुच्छ्रयः । ( १० ) देशादौ विषयः । (११) निर्यासे रसभेदेऽङ्गरागेविलेपने च कषायः । (१२) समाऽऽश्रयाभ्युपगमेषु–प्रतिश्रयः ।

[1]प्रायो भूम्न्यन्तगमने [2]मन्युर्दैन्ये क्रतौ क्रुधि ।
[3]रहस्योपस्थयोर्गुह्यं [4]सत्यं शपथतथ्ययोः ॥ १५४ ॥
[5]वीर्यं बले प्रभावे च [6]द्रव्यं भव्ये गुणाश्रये ।
[7]धिष्ण्यं स्थाने गृहे भेऽग्नौ [8]भाग्यं कर्म शुभाशुभम् ॥
[9]कशेरुहेम्नोर्गाङ्गेयं [10]विशल्या दन्तिकाऽपि च ।
[11]वृषाकपायी श्रीगौर्योर[12]भिख्या नामशोभयोः ॥
[13]आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम् ।
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ॥
[14]छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ।
[15]कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने ॥

(१) बाहुल्यादौ प्रायः । (२) दैन्यादौ–मन्युः । (३) द्वयोर्गुह्यम् । (४) द्वयोः सत्यम् । (५) द्वयोर्वीर्यम् । (६) द्वयोर्द्रव्यम् । (७) स्थानादौ–धिष्ण्यम् । (८) शुभाशुभकर्मादौ भाग्यम् । (९) भीष्मस्वर्णकशेरुकेषु गाङ्गेयम् । (१०) दन्तिकागुडूच्यादिषु–विशल्या । (११) द्वयोर्वृषाकपायी । (१२) द्वयोरभिख्या । (१३) नव स्वर्थेषु क्रिया । (१४) चतुर्षुच्छाया । (१५) चतुर्षु कक्ष्याशब्द ।

कृ[1]त्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ।
[2]जन्यं स्याज्जनवादेपि [3]जघन्योऽन्त्येऽधमेऽपि च ॥
[4]गर्ह्याहीनौ च वक्तव्यौ [5]कल्यौ सज्जनिरामयौ ।
[6]आत्मवाननपेतोऽर्थादर्थ्यौ [7]पुण्यन्तु चार्वपि ॥1६०
[8]रूप्यं प्रशस्तरूपेऽपि [9]वदान्यो वल्गुवागपि ।
[10]न्याय्येऽपि मध्यं सौम्यं [11]तु सुन्दरे सोमदैवते ।

❀ इति यान्ताः ❀

[12]निर्वहावसरौ वारौ [13]संस्तरौ प्रस्तराऽध्वरौ ।
[14]गुरू गीष्पतिपित्राद्यौ [15]द्वापरौ युगसंशयौ ॥१६२॥

---

(१) त्रिष्वर्थेषु कृत्याशब्द । (२) 'जन्य निर्वादयुद्धयो' इति धरणि । (३) अन्तादौ जघन्य । (४) द्वयोर्वक्तव्यः । (५) सज्जादौ कल्पः । (६) द्वयोरर्थ्यः । (७) धर्ममनोज्ञादिषु—पुण्यम् । (८) सुन्दरे रजतादौ च—रूप्यम् । (९) 'वदान्यो दातृवाग्मिनोः' इत्यजयः । (१०) वल्गाधमन्याय्येषु—मध्यम् । (११) बुधसुन्दरमनोज्ञादिषु—सौम्यम् । (१२) द्वयोर्वार । (१३) द्वयो संस्तर । (१४) द्वयोरर्थयोर्गुरुः । (१५) द्वयोर्द्वापर ।

[1]प्रकारौ भेदसादृश्ये [2]आकाराविङ्गिताकृती ।
[3]किंशारू सस्यशूकेषु [4]मरू धन्वधराधरौ ॥१६३॥
[5]अद्रयो द्रुमशैलार्काः [6]स्त्रीस्तनाब्दौ पयोधरौ ।
[7]ध्वान्तारिदानवा वृत्रा [8]बलिहस्तांशवः कराः ॥
[9]प्रदरा भङ्गनारीरुग्बाणा [10]अस्राः कचा अपि ।
[11]अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूवरौ १६४
[12]स्वर्णेऽपि राः [13]परिकरः पर्यङ्कपरिवारयोः ।
[14]मुक्ताशुद्धौ च तारः [15]स्याच्छारो वायौ स तु त्रिषु॥
कर्बुरेऽथ [16]प्रतिज्ञाजिसंविदापत्सु सङ्गरः ।
[17]वेदभेदे गुप्तवादे मन्त्रो मित्रो [18]रवावपि ॥१६७॥

(१) भेदसादृश्ययोः प्रकारः । (२) द्वयोराकारः । (३) द्वयोः किंशारुः । (४) द्वयोर्मरुः । (५) द्रुमादावद्रिः । (६) स्तनाब्दयोःपयोधरः । (७) त्रिषु वृत्रः । (८) बल्यादौ करः । (९) भङ्गादौ प्रदरः । (१०) अश्रुकचयोरस्रः । (११) द्वयोस्तुवरः । (१२) धनस्वर्णादौ रैशब्दः । (१३) पर्यङ्कादौ परिकरः । (१४) मौक्तिकादौ तारः । (१५) वायुकर्बुरयोः शारः । (१६) त्रिषु सङ्गरः । (१७) द्वयोर्मन्त्रः । (१८) सूर्यादौ मित्रशब्दः ।

[1]मखेपुयूपखण्डेऽपि स्वरुर्[2]गुह्येऽप्यवस्करः ।
[3]आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ॥१६८॥
[4]अभिहारोऽभियोगे च चौर्ये सन्नहनेऽपि च ।
[5]स्याज्जङ्गमे परीवारः खड्गकोषे परिच्छदे॥१६९॥
[6]विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ।
[7]द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे १७०
[8]विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु ।
[9]सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु १७१
[10]दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ।
[11]महारण्ये दुर्गपथे कान्तारं पुन्नपुंसकम् ॥१७२॥
[12]मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।

---

(१) वज्रयशीवाणयूपखण्डेषु स्वरुः । (२) वर्चस्कगुह्ययोरवस्करः । (३) द्वयोराडम्बरः । (४) अभियोगादावभिहारः । (५) जङ्गमादौ परीवारः । (६) विटपादौ विष्टरः । (७) द्वारःस्थादौ प्रतीहारः । (८) विपुलनकुलादौ बभ्रुः । (९) बलादौ सारः । (१०) द्यूत कारादौ दुरोदर ।(११) महारण्यादौ कान्तारः । (१२) अन्यशुभद्वेषादौ मत्सरः ।

[1]देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ॥
[2]वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ।
[3]ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् १७४
[4]यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥१७५॥
[5]शर्करा कर्परांशेऽपि [6]यात्रा स्याद्यापने गतौ ।
[7]इरा भूवाक्सुराप्सु स्यात्तन्द्री निद्राप्रमीलयोः ॥
[9]धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि ।
[10]क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका १७७
त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रं [11]मात्रा परिच्छदे ।
अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे ॥

---

(१) देवादुवृतादौ वरशब्द. (२) वशाङ्कुरादौ करीरः । (३) चमूजवनादौ प्रतिसरः । (४) यमानिलादौ हरिः । (५) कर्परांशे खण्डविकृयादौ च शर्करा । (६) यापनादौ यात्रा । (७) पृथिव्यादाविरा । (८) निद्रादौ तन्द्रा । (९) उपमात्रादौ–धात्री । (१०) व्यङ्गादौ–क्षुद्रा, क्रूराद क्षुद्रः । (११) परिच्छदादौ–मात्रा । कार्त्स्न्यादौ–मात्रम् ।

[1]आलेख्याश्चर्ययोश्चित्रं क[2]लत्रं श्रोणिभार्ययोः ।
यो[3]ग्यभाजनयोः पात्रं [4]पत्रं वाहनपक्षयोः ॥१७९॥
नि[5]र्देशग्रन्थयोः शास्त्रं [6]शस्त्रमायुधलोहयोः ।
[7]स्याज्जटांशुकयोर्नेत्रं क्षेत्रं [8]पत्नीशरीरयोः ॥१८०॥
[9]मुखाग्रे क्रोडहलयोःपोत्रं गोत्रं [10]तु नाम्नि च ।
[11]सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च॥१८१॥
[12]अजिरं विषये कायेऽप्य[13]म्बरं व्योम्नि वाससि ।
[14]चक्रं राष्ट्रे[15]ऽप्यक्षरं तु मोक्षेऽपि क्षी[16]रमप्सु च ॥

---

(१) आलेख्यादौ-चित्रम् । (२) श्रोण्यादौ-कलत्रम् । (३) योग्यादौ पात्रम् । (४) वाहनादौ-पत्रम् । (५) निर्देशादौ-शास्त्रम् । (६) आयुधादौ-शस्त्रम् । (७) जटादौ नेत्रम् । (८) पत्न्यादौ-क्षेत्रम् । (९) शूकरमुखाग्रादौ-पोत्रम् । (१०) नामपर्वतादौ गोत्रशब्द. । (११) आच्छादनादौ—सत्रम् । (१२) विषयादावजिरम् । (१३) गगनादावम्बरम् । (१४) राष्ट्रकोकरथाङ्गादौ—चक्रम् । (१५) मोक्षापवर्गब्रह्मादावक्षरम् । (१६) दुग्धे जले च-क्षीरम् ।

स्वर्णेऽपि भूरि[1]चन्द्रौ द्वौ [2]द्वारमात्रेऽपि गोपुरम् ।
[3]गुहादम्भौ गह्वरे द्वे [4]रहोऽन्तिकमुपह्वरे ॥१८३॥
[5]पुरोऽधिकमुपर्यग्राण्य[6]गारे नगरे पुरम् ।
मन्दिरं चाथ [7]राष्ट्रोऽस्त्री विषये स्यादुपद्रवे ॥
[8]दरोऽस्त्रियां भये श्वभ्रे [9]वज्रोऽस्त्री हीरके पवौ ।
[10]तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे ॥१८६
औशीरश्[11]चामरे दण्डेऽप्यौशीरं शयनासने ।
[12]पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ॥१८६॥
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ।

(१) भूरिः—स्वर्णकृष्णब्रह्मादौ पुंसि, सुवर्णे क्लीवम् । कर्पूरस्वर्णादौ चन्द्रः । (२) पूर्द्वारि द्वारसामान्ये च गोपुरम् । ( ३ ) गुहादम्भयो॰ गह्वरम् । ( ४ ) अन्तिकादौ रहसि च—उपह्वरः । ( ५ ) अधिकादा॰ वग्रम् । ( ६ ) अगारनगरयोः पुरमन्दिरशब्दौ । ( ७ ) देशादौ—राष्ट्रः । ( ८ ) भयादौ दरः । ( ९ ) हीरकादौ वज्रम् । (१०) प्रधानादौ तन्त्रम् । (११) चामरे दण्डे–औशीरः । शयनासनयोश्च–औशीरम् । (१२) करि-हस्ताग्रादौ- पुष्करम् ।

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ॥
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ।
मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम् ॥१८८॥
शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम् ।
गौरोऽरुणे सिते पीते व्रणकार्यप्यरुष्करः ॥१८९॥
जठरः कठिनेऽपि स्यादधस्तादपि चाधरः ।
अनाकुलेऽपि चैकाग्रो व्यग्रो व्यासक्त आकुले ॥
उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः ।
एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः पराः॥१९१॥

---

(१) अवकाशादावन्तरम् । (२) स्थाल्यां मुस्ते मन्थदण्डे च पिठरम् । ( ३ ) मुस्तकशुण्ठीविदग्धादौ नागरम् । (४) घातुकादौ शार्वरम् । (५) अरुणादौ गौरः । (६) भल्लातके व्रणकारके च—अरुष्करः (७) कठिने कुक्षौ च जठरः । (८) ओष्ठेऽधस्ताच्चाधरः । (९) एकताने ऽनाकुले च-एकाग्रः । (१०) व्यासक्तादौ व्यग्रः । (११) प्रतिवाक्यादावुत्तरशब्द । (१२) श्रेष्ठादावनुत्तरः । (१३) दूरादौ—परः ।

स्वादुप्रियौ तु मधुरौ क्रूरौ कठिननिर्दयौ ।
उदारो दातृमहतोरितरस्त्वन्यनीचयोः ॥१९२॥
मन्दस्वच्छन्दयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः ।

ॐ इति रान्ताः ॐ

चूडा किरीटं केशाश्च संयता मौलयस्त्रयः॥१९३॥
द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ।
कृतान्तानेहसोः कालश्चतुर्थेऽपि युगे कलिः १९४
स्यात्कुरङ्गेऽपि कमलः प्रावारेऽपि च कम्बलः ।
करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् ॥
स्थौल्यसामर्थ्यसैन्येषु बलं ना कालसीरिणोः ।

---

(१) स्वादुप्रिययोर्मधुरः । (२) कठिननिर्दययो क्रूरः । (३) दातृमहतोरुदारः । (४) अन्यनीचयोरितरः । (५) मन्दस्वच्छन्दयोः स्वैरः । (६) उद्दीप्तशुक्लयो. शुभ्र. । (७) चूडादौ त्रिपु मौलिः । (८) मातङ्गादौ–पीलुः । (९) यमसमययो –कालः । (१०) कलहादौ कलिः । (११) मृगे जले कमले च कमलशब्द । (१२) नागराजसास्नाप्रावारादिषु कम्बलः । (१३) करादौ–बलिः पुसि । प्राण्यङ्गे वलिः स्त्रियाम् । (१४) स्थौल्यादौ बलम् । कालादौ बलः ।

वातूलः[1] पुंसि वात्यायामपि वातासहे त्रिषु १९६
भेद्यलिङ्गः[2] शठे व्यालः पुंसि श्वापदसर्पयोः ।
मलोऽस्त्री[3] पापविट्किट्टान्यस्त्री शूलं[4] रुगायुधम् ॥
शङ्कावपि[5] द्वयोः कीलः पालिः[6] स्त्र्यश्र्यङ्कपङ्क्तिषु ।
कला[7] शिल्पे कालभेदेऽप्याली[8] सख्यावली अपि
अब्ध्यम्बुविकृतौ[9] वेला कालमर्यादयोरपि ।
बहुलाः[10] कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु ।
लीला[11] विलासक्रिययोरुपला[12] शर्करापि च ।
शोणितेऽम्भसि[13] कीलालं मूलमाद्ये[14] शिफाभयोः

---

(१) वात्यादौ वातूल [ भमूँलियो ]। (२) शठादौ—व्यालः। (३) पापादौ मलः। (४) रुगादौ शूलम्। (५) स्थाणुवह्निज्वालादौ च कीलः। (६) अश्र्यङ्कादिषु पालिः स्त्री। (७) शिल्पादौ—कला। (८) सख्यादिष्वालिः। (९) समुद्रजलविकारविशेषे कालादौ च—वेला [ 'ज्वार' ]। (१०) कृत्तिकादिषु—बहुलः। (११) विलासादौ—लीला। (१२) प्रस्तरे उपलः, शर्कराया—उपला। (१३) शोणितादौ—कीलालम्। (१४) प्रथमादौ मूलम्।

[1]जालं समूह आनाये गवाक्षक्षारकेष्वपि ।
[2]शीलं स्वभावे सद्वृत्ते [3]सस्ये हेतुकृते फलम् ॥
[4]छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ।
[5]अधःस्वरूपयोरस्त्री तलं [6]स्याच्चामिषे पलम् ॥२०२॥
[7]और्वानलेऽपि पातालं [8]चैलं वस्त्रेऽधमे त्रिषु ।
[9]कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ॥२०३
[10]निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ।
[11]पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु ॥२०४॥
[12]प्रवालमङ्कुरेऽप्यस्त्री [13]त्रिषु स्थूलं जडेऽपि च ।

---

(१) समूहादौ जालम् । (२) स्वभावादौ शीलम् । (३) सस्यादौ—फलम् । (४) छदिःसमूहादौ—पटलम् । (५) अधःस्वरूपादौ—तलम् । (६) आमिषे कर्षचतुष्टये च पलम् । (७) नागलोके वडवानले च पातालम् । (८) वस्त्रादौ—चेलम् । (९) शङ्कुसङ्कुले श्वभ्रादौ च कुकूलम् । (१०) निर्णीतादौ केवलम् । (११) पर्याप्त्यादौ कुशलम् । (१२) अङ्कुरविद्रुमादौ प्रवालम् । (१३) जडपीवरादौ स्थूलम् ।

[1]करालो दन्तुरे तुङ्गे [2]चारौ दक्षे च पेशलः ॥२०५॥
[3]मूर्खेऽर्भकेऽपि बालः [4]स्याल्लोलश्चलसतृष्णयोः ।

❀ इति लान्ताः ❀

[5]देवदावौ वनारण्यवह्नी [6]जन्महरौ भवौ ॥२०६॥
[7]मन्त्री सहायः सचिवौ [8]पतिशाखिनरा धवाः ।
[9]अवयः शैलमेषार्का [10]आज्ञाह्वानाध्वरा हवाः २०७
[11]भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ।
[12]स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ॥२०८॥
[13]अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ।
[14]उत्सेकामर्षयोरिच्छाप्रसवे मह उत्सवः ॥२०९॥
[15]अनुभावः प्रभावे च सतां च मतिनिश्चये ।

---

(१) द्वयोः करालः । (२) चारुदक्षयोः पेशलः । (३) मूर्खादौ बालः । (४) चपलादौ—लोलः । (५) द्वयोर्दवो दावश्च । (६) द्वयोर्भवः । (७) द्वयोः सचिवः । (८) त्रिषु धवः । (९) शैलादौ—अविः । (१०) आज्ञादौ हवः । (११) सत्तादौ भावः । (१२) उत्पादादौ प्रसवः । (१३) अविश्वासादौ निह्नवः । (१४) उत्सेकादौ—उत्सवः । (१५) प्रभावादौ—अनुभवः ।

[1]स्याज्जन्महेतुःप्रभवः स्थानं चाद्योपलब्धये॥२१०॥
[2]शूद्रायां विप्रतनये शस्त्रे पारशवो मतः।
[3]ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु॥२११
स्वो [4]ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने
स्त्री[5]कटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च॥२१२
[6]शिवा गौरी फेरवयो[7]र्द्वन्द्वं कलहयुग्मयोः।
[8]द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु॥२१३॥
क्लीबं [9]नपुंसके षण्ढे वाच्यलिङ्गमविक्रमे।

❀ इति वान्ताः ❀

द्वौ विशौ [10]वैश्यमनुजौ द्वौ [11]चराभिमरौ स्पशौ॥

(१) जन्महेत्वादौ–प्रभवः। (२) शूद्रायां विप्रपुत्रे शस्त्रादौ च पारशवः। (३) निश्चितादौ ध्रुवः। (४) ज्ञातावात्मनि च स्वः पुंसि। आत्मीये—त्रिषु। धनेऽस्त्रियाम्। (५) स्त्रीकटीवस्त्रग्रन्थ्यादौ नीवी। (६) गौर्यादौ शिवा। (७) कलहादौ द्वन्द्वम्। (८) द्रव्यादौ–सत्त्वम्। (९) नपुंसकादौ–क्लीबम्। वान्तोऽप्ययमिति केचित्। (१०) द्वयोर्विट् शान्तः। (११) द्वयोः स्पशः।

द्वौ [1]राशी पुञ्जमेषाद्यौ द्वौ [2]वंशौ कुलमस्करौ ।
[3]रहःप्रकाशौ विकाशौ [4]निर्वेशो भृतिभोगयोः २१५
[5]कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु ।
[6]पदे लक्ष्ये निमित्तेऽपदेशः स्यात्[7]कुशमप्सु च ॥
[8]दशाऽवस्थानेकविधाप्याशा[9] तृष्णापि चायता ।
[10]वशा स्त्री करिणी च स्याद् [11]दृग्ज्ञाने ज्ञातरि त्रिषु ॥
[12]स्यात्कर्कशः साहसिकः कठोरमसृणावपि ।
[13]प्रकाशोऽतिप्रसिद्धेऽपि [14]शिशावज्ञे च बालिशः ॥
कोशोऽस्त्री[15]कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।

❀ इति शान्ताः ❀

---

(१) पुञ्जादौ–राशिः । (२) कुलादौ वंशः । (३) रहसि प्रकाशे च वीकाश । (४) द्वयोरर्थयोर्निर्वेशः । (५) कृतान्तादौ कीनाशः । (६) पदादावपदेशः । (७) दर्भजलादौ कुशम् । (८) दीपवर्त्यवस्थादौ–दशा । (९) दिक्तृष्णादौ—आशा । (१०) वन्ध्याकरिण्यादौ—वशा । (११) ज्ञानादौ दृक् शान्ता । (१२) साहसिकादौ–कर्कशः । (१३) स्फुटातपाति-प्रसिद्धादौ प्रकाशः । (१४) मूर्खबाल्योर्बालिशः । (१५) कुड्मलादौ–कोशः ।

[1]सुरमत्स्यावनिमिषौ [2]पुरुषावात्ममानवौ ॥२१९॥
[3]काकमत्स्यात्खगौ ध्वाङ्क्षौ [4]कक्षौ तु तृणवीरुधौ ।
[5]अभीषुः प्रग्रहे रश्मौ [6]प्रैषः प्रेषणमर्दने ।
[7]पक्षः सहायेऽप्युष्णीषः [8]शिरोवेष्टकिरीटयोः ॥२२०
[9]शुक्ले मूषके श्रेष्ठे सुकृते वृषभे वृषः ।
[10]द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथा[11]क्षमिन्द्रिये ॥
ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे ।
[12]कर्षूर्वार्ता करीषाग्निः कर्पूः कुल्याभिधायिनी ॥
[13]पुंभावे तत्क्रियायां च पौरुषं [14]विषमप्सु च ।
[15]उपादानेऽप्यामिषं स्याद[16]पराधेऽपि किल्विषम् ॥

(१) देवमत्स्ययोरनिमिषः । (२) आत्ममनुष्ययोः पुरुषः । (३) मत्स्यभक्षिकाकभिक्षुकेषु ध्वाङ्क्षः । (४) तृणवीरुधोः—कक्षः । (५) प्रग्रहादावभीषुः । (६) प्रेषणादौ-प्रैषः । (७) सहायपार्श्वादौ—पक्षः । (८) किरीटादौ—उष्णीषम् । (९) श्रेष्ठशुक्लादौ वृषः । [ कोषशब्दः षान्तोऽत्र क्वचित्—पठ्यते ] । (१०) द्यूतादावाकर्षः । (११) इन्द्रियादावक्षः । (१२) वार्तादौ कर्षूः स्त्रियाम् । (१३) पुंभावादौ पौरुषम् । (१४) जलगरलयोर्विषम् । (१५) मांसोपादानादिषु—आमिषम् । (१६) अपराधपापादौ किल्विषम् ।

[1]स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् ।
[2]प्रेक्षा नृत्येक्षणं प्रज्ञा [3]भिक्षा सेवार्थना भृतिः २२४
[4]त्विट् शोभापि त्रिषु परे [5]न्यक्षं कार्त्स्न्ये निकृष्टयोः ।
[6]प्रत्यक्षेऽधिकृतेऽध्यक्षो [7]रूक्षस्त्वप्रेम्ण्यचिक्कणे २२५

॥ इति पान्ताः ॥

[8]रविश्वेतच्छदौ हंसौ [9]सूर्यवह्नी विभावसू ।
[10]वत्सौ तर्णकवर्षौ द्वौ [11]सारङ्गाश्च दिवौकसः ॥२२६॥
[12]शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।
[13]पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥२२७॥

---

(१) वृष्ट्यादौ वर्षम् । (२) नृत्येक्षणप्रज्ञयोः प्रेक्षा । (३) सेवाप्रार्थनादौ-भिक्षा । (४) शोभाकान्त्यादौ त्विट् पान्ता । वक्ष्यमाणा न्यक्षादयस्त्रयो वाच्यलिङ्गाः । (५) कार्त्स्न्यादौ न्यक्षम् । (६) प्रत्यक्षाध्यक्षयोरध्यक्षः । (७) अस्निग्धादौ—रूक्षः । (८) रविहंसयोर्हंसः । (९) सूर्याग्न्योर्विभावसुः । (१०) तर्णकवर्षयोर्वत्सः । (११) सारङ्गदेवादौ दिवौकाः । (१२) शृङ्गारादौ रसः । (१३) कर्णपूरादावुत्तंसः, अवतंसश्च ।

[1]देवभेदेऽनले रश्मौ वसू रत्ने धने वसु ।
[2]विष्णौ च वेधाः स्त्री [3]त्वाशीर्हिताशंसाहिदंष्ट्रयोः ॥
[4]लालसे प्रार्थनौत्सुक्ये [5]हिंसा चौर्यादिकर्म च ।
[6]प्रसूरश्वापि [7]भूद्यावौ रोदस्यौ रोदसी च ते २२९
[8]ज्वालाभासौ न पुंस्यर्चि[9]र्ज्योतिर्भद्योतदृष्टिषु ।
[10]पापापराधयोरागः [11]खगबाल्यादिनोर्वयः ॥२३०॥
तेजः[12]पुरीषयोर्वर्चो [13]महस्तूत्सवतेजसोः ।
[14]रजोगुणे च स्त्रीपुष्पे [15]राहौ ध्वान्तेगुणे तमः २३१
[16]छन्दः पद्येऽभिलाषे च [17]तपः कृच्छ्रादिकर्म च ।

---

(१) देवभेदादौ वसुशब्द. । (२) विष्णुब्रह्मणोर्वेधाः । (३) हिताशंसनादौ-आशी.षान्ता स्त्रियाम् । (४)प्रार्थनादौ लालसा । (५) चौर्यकर्ममारणयोर्हिंसा । (६) अश्वाजनन्योः प्रसूः स्त्रियाम् । (७) पृथिव्यादौ रोदसी रोदस्यौ च । ईकारान्तस्य सान्तस्य वा द्विवचने रूपम् । (८) ज्वालादावर्चिः क्लीबे । (९) नक्षत्रादौ ज्योतिः क्लीबे । (१०) पापापराधयोरागः सान्तं क्लीबे । (११) खगादौ वय. सान्त क्लीबे । (१२) तेज पुरीषयोर्वर्चः सान्त क्लीबे । (१३) उत्सवादौ महः सान्तम् । (१४) गुणादौ रजः । (१५) ध्वान्तादौ तमः । (१६) पद्यादौ छन्दः । (१७) कृच्छ्रादौ तपः सान्त क्लीबे ।

सहो[1] बलं सहा मार्गो नभः[2] खं श्रावणो नभाः ॥
ओकः[3] सद्माश्रयश्चौकाः पयः[4] क्षीरं पयोऽम्बु च ।
ओजो[5] दीप्तौ बले स्रोतः[6] इन्द्रिये निम्नगारये २३३
तेजः[7] प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु ।
विद्वान्[8] विदंश्च बीभत्सो[9] हिंस्रेऽप्यतिशये त्वमी ।
वृद्धप्रशस्ययोर्ज्यायान्[10] कनीयांस्तु[11] युवाल्पयोः ॥
वरीयांस्तूरुवरयोः[12] साधीयान्[13] साधुबाढयोः २३५

* इति सान्ताः *

दलेऽपि[14] बर्हं निर्बन्धोपरागार्कादयो[15] ग्रहाः ।

---

(१) बले क्लीबे, पुंसि मार्गशीर्षादौ सहःशब्दः । (२) गगनादौ नभः । (३) सद्मादौ ओकः सान्तः पुंसि क्लीबे च । (४) जलादौ पयः । (५) बलादावोजः । (६) इन्द्रियादौ स्रोतः । (७) प्रभावादौ तेजः । अतः सान्ता त्रिषु । (८) पण्डितादौ विद्वान् । (९) विकृतादौ बीभत्सः । वक्ष्यमाणाश्चत्वारोऽतिशयेऽर्थे । (१०) अतिशयेन वृद्धः प्रशस्यश्च–ज्यायान् । (११) युवाल्पयो –कनीयान् । (१२) ऊरुवरयोः–वरीयान् । (१३) अतिशयितः साधुर्बाढो वा–साधीयान् । (१४) पिच्छपत्रयो बर्हम् । (१५) निर्बन्धादौ ग्रहः ।

[1]द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके ॥२३६॥
[2]तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च ।
[3]पत्नी परिजनादानमूलशापाः परिग्रहाः ॥२३७॥
[4]दारेषु च गृहाः [5]श्रोण्यामप्यारोहो वरस्त्रियाः ।
[6]व्यूहो वृन्देऽप्य[7]हिर्वृत्रेऽप्य[8]ग्नीन्द्वर्कास्तमोऽपहाः ॥
[9]परिच्छदे नृपार्हेऽर्थे परिबर्होऽव्ययाः परे ।

ॐ इति हान्ताः ॐ

[10]आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ।२३८।
[11]आ प्रगृह्यः स्मृतौ वाक्येऽप्या[12]स्तु स्यात्कोपपीडयोः ।
[13]पापकुत्सेषदर्थे कु धि[14]ङ् निर्भर्त्सननिन्दयोः ।२४०।

---

(१) 'निर्यूहः शेखरे द्वारे निर्यासे नागदन्तके' इति विश्व । 'निर्व्यूह' इति क्वचित्पाठः । (२) तुलासूत्रादौ प्रग्राहप्रग्रहौ । (३) पत्न्यादौ परिग्रहः । (४) स्त्रीगृहादौ गृहशब्द । (५) श्रोण्यादौ आरोहः । (६) वृन्दादौ व्यूह । (७) सर्पवृत्रयोरहिः । (८) अग्न्यादौ तमोपहः । (९) परिच्छदादौ परिवर्हः । (१०) अथ अनेकार्था अव्यया उच्यन्ते,—ईषदर्थेऽभिव्याप्त्यादौ च—आङ् । (११) स्मृतौ वाक्यारम्भे च—आ । (१२) कोपपीडयोः—आः ! (१३) पापादौ—कु । (१४) निर्भर्त्सनादौ—धिक् ।

[1]चान्वाचयसमाहारेतरेतरसमुच्चये ।
[2]स्वस्त्याशीःक्षेमपुण्यादौ [3]प्रकर्षे लङ्घनेऽप्यति ॥२४१
[4]स्वित्प्रश्ने च वितर्के च [5]तु स्याद्भेदेऽवधारणे ।
[6]सकृत्सहैकवारे [7]चाप्यारादूरसमीपयोः ॥२४२॥
[8]प्रतीच्यां चरमे पश्चा[9]दुताप्यर्थविकल्पयोः ।
[10]पुनः सहार्थयोः शश्वत्[11]साक्षात्प्रत्यक्षतुल्ययोः २४३
[12]खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत ।
[13]हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः २४४
[14]प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।
[15]इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥२४५॥

---

(१) अन्वाचयादौ च । (२) आशीःक्षेमादौ—स्वस्ति । (३) प्रकर्षादौ—अति । (४) प्रश्नादौ—स्वित् । (५) भेदेऽवधारणे तु (६) एकवारे सहार्थे च—सकृत् । (७) दूरसमीपयोरारात् । (८) प्रतीच्यादौ—पश्चात् । (९) विकल्पाप्यर्थादौ—उत । (१०) पुनः सहार्थयोः शश्वत् । (११) प्रत्यक्षतुल्ययोः साक्षात् । (१२) खेदादौ—बत । (१३) हर्षादौ हन्त । । (१४) प्रतिनिध्यादौ—प्रति । (१५) हेत्वादौ—इति ।

[1]प्राच्यां पुरस्तात्प्रथमे [2]पुरार्थेऽग्रत इत्यपि ।
[3]यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ॥२४६॥
[4]मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।
[5]वृथा निरर्थकाविध्योर्[6]नानाऽनेकोभयार्थयोः॥२४७
[7]नु पृच्छायां विकल्पे च [8]पश्चात्सादृश्ययोरनु ।
[9]प्रश्नावधारणाऽनुज्ञानुनयामन्त्रणे ननु ॥२४८॥
[10]गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि ।
[11]उपमायां विकल्पे वा [12]सामि त्वर्धे जुगुप्सिते २४९
[13]अमा सह समीपे च [14]कं वारिणि च मूर्धनि ।
[15]इवेत्थमर्थयोरेवं [16]नूनं तर्केऽर्थनिश्चये ॥२५०॥

(१) प्राच्यादौ–पुरस्तात्, (२) पुरार्थे–अग्रतः । (३) साकल्यादौ–यावत् तावत् । (४) मङ्गलादौ–अथो, अथ । (५) निरर्थकाविध्योर्वृथा । (६) अनेकोभयार्थयोर्ना ना (७) पृच्छादौ नु । (८) पश्चात्सादृश्ययो –अनु । (९) प्रश्नादौ ननु । (१०) गर्हादौ–अपि । (११) उपमादौ वा । (१२) अर्धे जुगुप्सिते च सामि । (१३) सहार्थे समीपे च–अमा । (१४) जलशिरसोः कम् । (१५) इवेत्थमर्थयो –एवम् । (१६) तर्कादौ–नूनम् ।

[1]तूष्णीमर्थे सुखे जोषं [2]किं पृच्छायां जुगुप्सिते ।
[3]नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥२५१॥
[4]अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।
[5]हुं वितर्के परिप्रश्ने [6]समयान्तिकमध्ययोः ॥२५२
[7]पुनरप्रथमे भेदे [8]निर्निश्चयनिषेधयोः ।
[9]स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा २५३
[10]ऊररीउररी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ।
[11]स्वर्गे परे च लोके स्वर्[12]वार्तासंभाव्ययोः किल २५४
[13]निषेधवाक्यालङ्कारजिज्ञासानुनये खलु ।
[14]समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः २५५

(१) तूष्णीमर्थे सुखे–जोषम् । (२) जुगुप्साया पृच्छायाश्च किम् । ( ३ ) प्राकाश्यादौ नाम । ( ४ ) भूषणादौ–अलम् । ( ५ ) वितर्कपरिप्रश्नयो –हुँ । ( ६ ) अन्तिकमध्ययोः समया । ( ७ ) अप्रथमे भेदे च पुनः । (८) निश्चयनिषेधयो· निः । ,(९) प्रबन्धादौ–पुरा । (१०) विस्तारेऽङ्गीकृतौ च–ऊररी, ऊरी, उररी । (११) स्वर्गादौ स्वः । (१२) वार्तादौ किल । (१३) निषेधादौ खलु । (१४) समीपादौ अभितः ।

[1]नामप्राकाश्ययोः प्रादु[2]र्मिथोऽन्योन्यं रहस्यपि ।
तिरो[3]ऽन्तर्धौ तिर्यगर्थे [4]हा विषादाशुगर्तिषु ।२५६।
[5]अहहेत्यद्भुते खेदे हि [6]हेताववधारणे ।

❀ इति नानार्थवर्गः ❀

---

## ❀ अथ अव्ययवर्गः ❀

[7]चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।
[8]मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत् समाः ॥१॥
[9]स्राग् झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि द्रुते ।
[10]बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥२॥
[11]पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने ।

---

(१) नामप्राकाश्यादौ–प्रादुः । (२) अन्योन्यादौ मिथः । (३) अन्तर्धितिर्यगर्थयोः–तिरः । (४) विषादादौ–हा । (५) अद्भुतखेदयोः अहहा । (६) हेत्वादौ–हि । (७) त्रीणि चिरकालस्य । आद्यपदेन–चिर, चिरेण, चिरात्, चिरे इति गृह्यन्ते । ( ८ ) पञ्च–पौनःपुन्यार्थकाः । ( ९ ) सप्त द्रुतार्थाः । [झटपट] (१०) षट्–अतिशयवाचकाः । (११) षट् वर्जनार्थकाः ।

[1]यत्तद्यतस्ततो [2]हेतावसाकल्ये तु चिच्चन ॥३॥
[3]कदाचिज्जातु [4]सार्धं तु साकं सत्रा समं सह ।
[5]आनुकूल्यार्थकं प्राध्वं [6]व्यर्थके तु वृथा मुधा ॥४॥
[7]आहो उताहो किमुत विकल्पे किं किमूत च ।
[8]तु हि च स्म ह वै पादपूरणे [9]पूजने स्वती ॥५॥
[10]दिवाह्नीत्यथ [11]दोषा च नक्तं च रजनाविति ।
[12]तिर्यगर्थे साचि तिरोऽप्यथ [13]संबोधनार्थकाः ॥६॥
स्युः प्याट् पाडङ्ग है हे भोः [14]समया निकषा हिरुक् ।
[15]अतर्किते तु सहसा [16]स्यात्पुरः पुरतोऽग्रतः ॥७॥

---

(१) चत्वारि हेत्वर्थकानि । (२) द्वे असाकल्यार्थे । (३) द्वे 'कस्मिंश्चित्काले' इत्यर्थके । (४) पञ्च सहार्थकानि । (५) एकमानुकूल्यार्थकम् । (६) द्वे व्यर्थार्थके । (७) षट्–वितर्कार्थकानि । (८) षट्–पादपूरणे । (९) द्वे पूजने । (१०) अह्नीत्यर्थे द्वे । (११) रात्रावित्यर्थे द्वे । (१२) द्वे तिर्यगर्थे । (१३) षट् सम्बोधनार्थकानि । (१४) त्रीणि सामीप्यार्थकानि । (१५) एकमविचारितेर्थे । (१६) त्रीण्यग्रार्थकानि ।

[1]स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा।
किंचि[2]दीषन्मनागल्पे [3]प्रेत्यामुत्र भवान्तरे ॥८॥
[4]व वा यथा तथैवैवं साम्येऽहो ही [5]च विस्मये।
मौने [6]तु तूष्णीं तूष्णीकां [7]सद्यः सपदि तत्क्षणे ॥९॥
[8]दिष्ट्या समुपजोषं चेत्यानन्दे[9]ऽथान्तरेऽन्तरा।
अन्तरेण च मध्ये स्युः [10]प्रसह्य तु हठार्थकम् ॥१०॥
[11]युक्ते द्वे सांप्रतं स्थानेऽभी[12]क्ष्णं शश्वदनारते।
[13]अभावे नह्यनो नापि मा[14]स्म माऽलं च वारणे ॥११॥
[15]पक्षान्तरे चेद्यदि च [16]तत्त्वे त्वद्धाऽञ्जसा द्वयम्।
[17]प्राकाश्ये प्रादुराविः स्या[18]दोमेवं परमं मते ॥१२॥

---

(१) देवहविर्दानादौ पञ्च। (२) त्रीण्यल्पार्थकानि। (३) द्वे भवान्तरे। (४) षट् साम्यार्थकानि। (५) द्वे विस्मयार्थके। (६) द्वे मौने। (७) तत्क्षणे द्वे। (८) द्वे आनन्देऽर्थे। (९) द्वे मध्येऽर्थे। (१०) एकं हठे। (११) द्वे युक्ते। (१२) द्वे अनारते। (१३) चत्वारि अभावे। (१४) त्रीणि वारणे। (१५) पक्षान्तरे द्वे। (१६) तत्त्वे द्वे। (१७) द्वे प्राकाश्ये। (१८) त्रीण्यङ्गीकारे।

[1]समन्ततस्तु परितः सर्वतो विष्वगित्यपि ।
[2]अकामानुमतौ काम[3]मसूयोपगमेऽस्तु च ॥१३॥
[4]ननु च स्याद्विरोधोक्तौ [5]कच्चित्कामप्रवेदने ।
[6]निःषमं दुःषमं गर्ह्ये [7]यथास्वं तु यथायथम् ॥१४॥
[8]मृषा मिथ्या च वितथे [9]यथार्थं तु यथातथम् ।
[10]स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥१५॥
[11]प्रागतीतार्थकं [12]नूनमवश्यं निश्चये द्वयम् ।
[13]संवद्वर्षेऽवरे [14]त्वर्वा[15]गामेवं [16]स्वयमात्मना ॥१६॥
[17]अल्पे नीचै[18]र्महत्युच्चैः [19]प्रायो भूम्न्य[20]द्रुते शनैः ।

---

(१) चत्वारि सर्वत इत्यस्मिन्नर्थे । (२) अनिच्छानुमतौ—एकम् । (३) एकमसूयोपगमे । (४) एकं विरोधोक्तौ । (५) एकमिष्टपरिप्रश्ने । (६) द्वे गर्ह्ये । (७) यथायोग्ये द्वे । (८) द्वे असत्ये । (९) द्वे सत्ये । (१०) पक्षनिर्धारणे । (११) अतीते एकम् । (१२) द्वे निश्चये । (१३) एकं वर्षे । (१४) अवरे—अर्वाक् । (१५) एवमर्थे एकम् । (१६) आत्मना इत्यर्थे द्वयम् । (१७) एकमल्पेऽर्थे । (१८) महत्येकम् । (१९) भूम्नि—प्राय । (२०) अद्रुते—शनै ।

[1]सना नित्ये [2]बहिर्बाह्ये [3]स्मातीतेऽ[4]स्तमदर्शने ।१७।
[5]अस्ति सत्त्वे [6]रुषोक्तावु [7]ॐ प्रश्नेऽनुनये [8]त्वयि ।
[9]हुं तर्के [10]स्यादुषा रात्रेरवसाने [11]नमो नतौ ॥१८॥
पुनरर्थेऽङ्ग [12]निन्दायां [13]दुष्ठु [14]सुष्ठु प्रशंसने ।
[15]सायं साये [16]प्रगे प्रातः प्रभाते [17]निकषान्तिके ॥१९॥
- [18]परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति ।
[19]अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥२०॥

---

(१) नित्ये–सना। (२) वाह्ये–वहिः। (३) अतीते–स्म। (४) अदर्शने–अस्तम्। (५) सत्त्वे–अस्ति। (६) रुषोक्तौ–उ। (७) प्रश्ने–ऊँ। (८) अनुनये–अपि। (९) हुँ तर्के। (१०) रात्रेरवसने–उषा। (११) नतौ–नमः। (१२) पुनरित्यर्थे अङ्ग। (१३) निन्दायां–दुष्ठु। (१४) प्रशंसायां–सुष्ठु। (१५) दिनान्ते–सायम्। (१६) प्रभाते—द्दे। (१७) अन्तिके–निकषा। (१८) पूर्वे वर्षे–परुत्। पूर्वतरे वत्सरे–परारि। याति = वर्त्तमाने, वत्सरे—ऐषमः। (१९) पूर्वेह्नि—पूर्वेद्युः। उत्तरेऽह्नि—उत्तरेद्युः। अपरेह्नि—अपरेद्युः। एवम्–अधरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युरियति।

तथाऽधरान्यान्यतरेतरात्पूर्वेद्युरादयः ।
[1]उभयद्युश्चोभयेद्युः परेत्वह्नि[2] परेद्यवि ॥२१॥
[3]ह्योऽतीतेऽनागतेऽह्नि [4]श्वः [5]परश्वश्च परेऽहनि ।
[6]तदा तदानीं [7]युगपदेकदा [8]सर्वदा सदा ॥२२॥
[9]एतर्हि संप्रतीदानीमधुना सांप्रतं तथा ।
[10]दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥२३॥

❀ इत्यव्ययवर्गः ॥ ४ ॥ ❀

---

(१) उभयस्मिन्नहनीत्यर्थे—द्वयम् । (२) परेह्नि—परेद्यवि । ( ३ ) अतीते दिने ह्यः । (४) आगामिनि श्वः । (५) परेहनि—परश्व [ परसों ] । (६) तस्मिन् काले—तदा, तदानीम् । (७) एकस्मिन् काले—एकदा, युगपत् । (८) सर्वस्मिम् काले—सर्वदा, सदा । ( ९ ) एतस्मिन् काले—एतर्हि । एवम्—इदानीम्, अधुना साम्प्रतम्—अपि ।(१०) प्राच्यां दिशि—प्राक्, प्राच्या-दिश इति च—प्राक् । प्राची दिक् च—प्राक् । एव—देशे काले च । तथा—अवाच्यां दिशि,—अवाच्या दिशः,—अवाङ् देशो वा—अवाक् । एवम्—उदक्, प्रत्यक् । आदिपदेन—उत्तरात्, अधरात् दक्षिणादित्यादयः ।

## ❀ लिङ्गादिसंग्रहवर्गः ❀

सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ।
अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥१॥
लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।
स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥२॥

---

(१) सलिङ्गशास्त्रैः = पाणिन्याद्युक्तलिङ्गानुशासनसहितैः, सन्क्यजादिप्रत्ययजैः—चिकीर्षादिशब्दैः, कृत्प्रत्ययजैः = श्वपाकादिभिः, तद्धितप्रत्ययजैः = दाण्डपाता-दिभिः, समासजैः = 'अकारान्तोत्तरपदो द्विगु'रित्यादिभिरुक्तैः, प्रायः—अनुक्तैः = पूर्वमनुक्तैः,—शब्दैः—उपलक्षितः—अयं लिङ्गसंग्रह क्रियते । इह संग्रहे = अस्मिन् लिङ्गादिसंग्रहे—लिङ्ग सङ्कीर्णवत् = सङ्कीर्णवर्गवत—उन्नयेत् = जानीयात् । यथा सङ्कीर्णे प्रकृतिप्रत्ययादिभिर्लिङ्गनिर्णयस्तद्वदिहाप्युन्नयेदित्यर्थः ॥ १ ॥

(२) लिङ्गेति — लिङ्गस्य—शेषः = अवशेषः, तस्य विधानम् = विधिः, अत्रो-च्यमानो, व्यापी = पूर्वोक्तकाण्डत्रयस्य व्यापको बोध्यः, उत्सर्गत्वात् । यदि केनापि लिङ्गविशेषवचनवचनेन अत्रोक्तेन पूर्वोक्तेन वा,—न बाध्यते । (३) स्त्रियामिति—अधिकारोऽयम् मसीशब्द यावत् । ईच्च ऊच्च—तौ विरामे—अन्ते यस्य,—तच्च तदेकाच—[ ईकारान्तमूकारान्तश्चैकाच्छब्दरूपमिति यावत् ] स्त्रियाम् । यथा—श्रीः, धीः, ह्रीः, भ्रूः, लूः, भूः । लुनातीति लूरित्यादौ तु— 'कृतः

नाम विद्युन्निशावल्लीवाणीदिग्भूनदीधियाम् ।
अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥३॥
तल्वृन्दे येनिकट्यत्रा वैरमैथुनिकादिवुन् ।

कर्तरी'ति वक्ष्यमाणेन बाधात्रिलिङ्गतैव। योनिसहितप्राणिनाम-स्त्रियाम् । यथा-माता, दुहिता, याता, स्त्री । 'दार'शब्दे तु—'दाराः पुंभूम्नी'ति पूर्वोक्त-वचनादस्य बाध ।(१) विद्युदादीनामष्टानां नामानि स्त्रियाम् । यथा—विद्युत्, तडित् । रात्रि, रजनि । वल्लि, वीरुत् । 'वाणी'ति युक्तः पाठः । वाक्, गौः, गी । दिक् हरित् । भूः, भूमिः, कुः । सरित्, त्रिस्रोताः, विपाट् । धी-ग्रहणं चिन्त्यम्, अन्यतोपि सिद्धेः । अतो धियामिति पाठः । सवित्, चित्, प्रतिपत् । ( २ ) एकार्थः = समाहारे जायमान, अकारान्तोत्तरपदो द्विगुः स्त्रियाम् । दशमूली, त्रिलोकी, सप्तशती । (३) पात्राद्यन्तो द्विगुः स्त्रियां न । यथा—पञ्चपात्रं, चतुर्युगं त्रिभुवनम् । ( ४ ) तलन्त स्त्रियाम्,—ग्रामता, जनता । वृन्दार्थकाः = समूहार्थका ये—य-इनि-कट्य-त्रास्तदन्ता. स्त्रियाम् । पाशानां समूह.—पाश्या । खलिनी, शाकिनी, गोत्रा रथकट्या । 'द्वन्द्वाद्वुन्वैर-मैथुनिकयो'रिति विहितवुञन्ता स्त्रियाम् । अश्वमहिषिका, काकोलूकिका । अत्रिभरद्वाजिका । आदिना 'पादशतस्ये'ति 'दण्डव्यवसर्गयोश्च'ति वुनपि । द्विपदिकां ददाति । वुनो ग्रहणं—वुञोप्युपलक्षणम् । गार्गिकया श्लाघते,—

स्त्री भावादावनिक्तिण्णवुल्णच्ण्वुच्क्यब्युजिञङ्निशाः४
उणादिषु निरूरीश्च ङ्यावूङन्तं चलं स्थिरम् ।
तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा णदिक्॥५॥
घञो ञः सा क्रियाऽस्यां चेद्दाण्डपाता हि फाल्गुनी

'गोत्रचरणे'ति वुञ् । शैष्योपाध्यायिका,—द्वन्द्वमनोज्ञे'ति वुञ् । (१) 'स्त्रिया'-मित्यधिकारे—भावे कर्मादौ च ये ऽयादयः प्रत्ययास्तदन्तं स्त्रियाम् । यथा—अकरणिः, अजननिः,—'आक्रोशे नञ्यनि'रित्यनिः । कृतिः,—'स्त्रियाक्तिन्' । प्रच्छर्दिका,—'रोगाख्याया'मिति ण्वुल् । णच्—व्यावक्रोशी,—'कर्मव्यतिहारेण'जिति णच् । ण्वुच्—भवतः शायिका,—पर्यायार्हेति ण्वुच् । व्रज्या—'व्रजयजो'रिति क्यप् । युच्—कारणा, कामना,—ण्यासश्रन्थेति युच् । इञ्—कांत्वं कारिमकार्षीः ?,—'प्रश्नाख्यानयो'रितीञ् । अङ्—छिदा,—पिद्भिदेति अङ् । निः—ग्लानिः,—'ग्लाम्लाज्ये'ति निः । शः क्रिया, इच्छा । उणादिषु—न्यन्तमूदन्तमीदन्तश्च स्त्रियाम् । श्रेणिः, श्रोणिः, कर्पूः, चमूः । अवीः, तरी । ङयन्तमावन्तं यच्चल स्थिर वा तत् स्त्रियाम्—कदली, रमा, वामोरू ।

(१) 'तदस्यां प्रहरण'मिति णान्तं स्त्रियाम् । मुष्टिः प्रहरणमस्यां—मौष्टा, पाल्लवा । णदिक्=णोदाहरणस्येय दिक्,—तेन 'मौसला' 'दाण्डे'त्यादि बोध्यम् । (२) 'घञ. सास्या'मिति ञान्त स्त्रियाम् । दण्डपातोऽस्यां वर्तते-

श्यैनंपाता च मृगया तैलम्पाता स्वधेतिदिक् ॥६॥
स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि ।
लङ्का शेफालिका टीका धातकी पञ्जिकाऽऽढकी ७
सिध्रका सारिका हिक्का प्राचिकोल्कापिपीलिका ।
तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः ॥८॥
पिच्छाबितण्डाकाकिण्यश्चूर्णिःशाणीद्रुणीदरत् ।
सातिः कन्था तथाऽऽसन्दी नाभी राजसभापि च९

---

दाण्डपाता—फाल्गुनी । एवं—श्यैनम्पाता मृगया । तैलम्पाता स्वधा । ( १ ) अपचयस्य = ह्रस्वत्वस्य विवक्षायां स्त्रीत्वं,—यथा—अल्पं मृणालं—मृणाली, घटी, कुम्भी । ( २ ) लङ्कादयः स्त्रियाम् । 'ङ्यावूङन्त'मिति सिद्धे प्रपञ्चार्थं आरम्भः । लङ्का = रक्षः पुरी, शाखा, कुलटा, शाकिनी च । शेफालिका—पुष्पभेद । धातकी—वृक्षभेद । पञ्जिका—निखिलपदव्याख्या । आढकी= तुवरी । ( ३ ) सिध्रका—वृक्षभेदः । प्राचिका = वनमक्षिका, पक्षिभेदो वा । सुरङ्गा = भूमिगूढमार्ग. । माढिः = पत्रशिरा । ( ४ ) पिच्छा = निर्यासः । [ गोंद ] । चूर्णिः = टीकाभेद । द्रुणी = जलद्रोणी [ नांद ] । दरत् = प्रपात [ दरां ] । सातिः = दानम् । आसन्दी=वेत्रासनम् ।

झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ।
लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी१०

ॐ इति स्त्रीलिङ्गसंग्रहः ॐ

पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।
स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ॥११॥
करगण्डोष्ठदोर्दन्तकण्ठकेशनखस्तनाः ।
अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः

(१) चर्चरी=गीतभेदः । पारी = दोहनी ['कटोरी'—'टोकणी'] । लट्वा = पक्षिभेदः । गण्डूषा = उन्नतनाभि. । चमसी—पात्रभेदः । मसी—लेखन साधन । [स्याही] । लङ्कादयो मस्यन्ता स्त्रियाम् । (२) 'पुंस्त्वे' इत्याधिकारः । सभेदाः, सानुचराः, देवासुरपर्याया —पुंसि । यथा—अमराः, निर्जरा', देवाः इन्द्रः, सूर्य', गणेश. । हाहाः, मातलि. । असुराः दैत्याः । वलिः, रावणः । कूष्माण्ड., चण्ड., मुण्ड' । (३) स्वर्गादिस्तनान्ताः सपर्याया' सभेदाश्च पुंसि स्युर्यदि विशेषलिङ्गविधिना बाधो न स्यात् । स्वर्ग, नाक' । त्रिविष्टपादौ तु क्लीबवचनविशेषेण बाध । यागः = क्रतु. । तद्भेदाः—दर्शपौर्णमासादय. । एवं सर्वत्र । (४) अह्नाहान्ता. पुंसि । पूर्वाह्न., द्व्यहः । क्ष्वेडः = विषं, तद्भेदा पुंसि, विशेषवचनेनाबाधिताश्चेत् । यथा—'सौराष्ट्रिक.'—इत्यादि ।

श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ।
कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ॥१३॥
कषेणभमरोपान्ता यद्यदन्ता अमी अथ ।
पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ॥१४॥
नाम्न्यकर्तरि भावे च घञजब्नङ्णघाथुचः ।

रात्रान्ताः संख्याभिन्नपूर्वपदा पुंसि । यथा—अहोरात्र, पूर्वरात्रः । संख्या-पूर्वपदेतु नेद—पञ्चरात्रम् । (१) श्रीवेष्टाद्या निर्यासा पुंसि । श्रीवेष्टः, सरल', द्रव । आद्यपदेन—श्रीवास गुग्गुलु' सिह्लक इत्यादय । असन्ता अन्नन्ताश्च पुंसि, विशेषवचनैरबाधिताश्चेत् । अङ्गिरा, चन्द्रमा, वेधा । मघवा, राजा । अबाधिता' किम्—अप्सरस, जलौकसः । वर्त्म, लोम, साम । कसेरु-जतु-वस्तूनि विहाय,—तु-रु विरामका' पुंसि । हेतुः, सेतु', मेरुः, कुरुः ।

(२)ककरादियान्तद्वादशवर्णोपधा अदन्ता शब्दा पुंसि । अङ्क, लोकः । माष, तुष । गुण, घुण । दर्भ, गर्दभ । समीर', शूकरः । यूपः, कूपः । अर्थ', नाथ । जनः, घनः । विनय, प्रणय' । रस, हास । पटः, घटः । गोत्रप्रवर्त्तका, प्रवरा', चरणानां = वेदशाखानां नामानि च पुंसि । गौतम', भरद्वाजः । कठ, कलाप । (३) नाम्नि = संज्ञायाम्, अकर्त्तरि = कर्तृभिन्ने कारके, भावे च ये विहिता —घञादयः सप्त, तदन्ता पुंसि । यथा—घञ-

ल्युः कर्तरीमनिङ्भावे को घोः किः प्रादितोऽन्यः १५
[1]द्वन्द्वेऽश्ववडवावश्ववडवानसमाहृते ।
कान्तः सूर्येन्दुपर्यायपूर्वोऽयःपूर्वकोऽपि च ॥१६॥
[2]वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः ।

---

प्रासाद । एरच्—चयः जय· । 'ऋदोरप्'—कर., गर. । 'यजयाचयते'ति नङ्—यज्ञ, याच्ञा । न्याद.–'नौ णचे'ति णः । प्रच्छदः–'पुंसि संज्ञाया'मिति घः । वेपथुः—'ट्वितोऽथुच्' । कर्त्तरि ल्यु — नन्दनः । भावे इमनिच्–महिमा । 'सुपि स्थ' इति कः—प्रस्थ· । प्रादितः, अन्यस्मात्सुबन्ताच्च परस्मात्–घो. किः–प्रधि., जलधिः । (१) समाहारैकवत्त्वाभावे द्वन्द्वे–अश्ववडवौ–अश्ववडवानिति पुंसि । सूर्येन्दुपूर्व. अय.पूर्वश्च कान्तः पुंसि—सूर्यकान्त, चन्द्रकान्त., अयस्कान्त. । (२) वटकादयः–पतद्ग्रहान्ता· पुंसि । वटकः = माषपिष्टविकारः । अनुवाकः = मन्त्रसमूहः । रल्लक· = पद्मकम्बलभेदः [पशमीना] । कुडङ्गकः = लतागृहम् । पुङ्खः = बाणमूलम् । न्यूङ्खः = सामभेदः । समुद्ग. = पेटक. । विट· = जारः । पट्ट = पेषणशिला । धट = तुला । खट.=अन्धकूपः । कोट्टारः = कूपादौ । घट्ट. = तीर्थम् । 'कोट्टः=दुर्गपुरम्, अरघट्ट· = घटीयन्त्रम्' इति केचित् । हट्ट. = आपण. । पिण्ड. = देह । गोण्ड = वृद्धनाभिः । पिचण्डः = उदरम् । गडु = कुब्ज । करण्डः = मधुकोषः । वरण्ड. = समूहो

पुङ्खो न्यूङ्खःसमुद्गश्चविटपट्टघटाः खटः ॥१७॥
कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् ।
गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥१८॥
दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः ।
कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सयूपकौ ॥१९॥
आतपः क्षत्रिये नाभिः कुणपक्षुरकेदराः ।
पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः ॥२०॥
वेतालभल्लमल्लाश्च पुरोडाशोऽपि पट्टिशः ।
कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥२१॥

❀ इति पुंलिङ्गशेषः ❀

---

मुखरोगश्च । किणः = रूढव्रणचिह्नम् । [ सीतला आदिके दाग ] । घुणः = काष्ठकीट. । (१) दृति. = चर्मपुट. । सीमन्तः = केशवेशः । हरित् = दिशा रोमन्थः = चर्वितचर्वण पशूनाम् । उद्गीथ. = ओंकार , सामध्वनिश्च । स्तूप' = इष्टकाचय. । पूपक' = अपूपक. । क्षत्रिये नाभि' पुंसि, अन्यत्र स्त्रियाम्। कणप. = प्रासभेदः । कुणप इति पाठे—शव । केदरः = पण. [ खेरूज'– 'टका' ] । पुद्गल = देहादि. । (२) वेताल = भूताविष्ट शव. । मल्ल. = बलिष्ठ' । भल्ल = शस्त्रभेद. । पुरोडाश = हविर्भेद । पट्टिशः–शस्त्रभेद. ।

द्विहीने[1]ऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ।
शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बलम् ॥२२॥
फलहेमशुल्बलोहसुखदुःखशुभाशुभम् ।
जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥२३॥
कोट्याः[2]शतादिसंख्याऽन्या वा लक्षा नियुतं च तत्
द्व्यच्कमसिसुसन्नन्तं यदनान्तमकर्तरि ॥२४॥

---

कुल्माषः = काञ्जिकम् । रभसः = वेग. । कटाह. = लोहपात्रभेदः । पतद्ग्रहः = निष्ठीवनपात्रम् [ पीकदान ] ।

(१) द्वाभ्यां = स्त्रीपुंसाभ्यां हीने—'क्लीवे'—इत्यधिक्रियते । अन्यच्च = पूर्वोक्तसङ्ग्रहादवशिष्टं क्लीवे,—बाधकविरहे । किञ्च खादय', तत्पर्यायाश्च तद्विशेषाश्च क्लीवे । खं—गगनम् । अरण्यं—विपिनम् । श्वभ्रं विलम् । हिमं—तुहिनम् । उदकं—जलम् । शुल्बं—ताम्रम् । जलपुष्पाणि—कमलादीनि । एतानि सपर्यायाणि सविशेषाणि च क्लीवे । (२) कोट्या विना = तां विहाय शतादिका संख्या क्लीवे । शतम्, सहस्रम्, अयुतम्, अर्बुदम् । लक्ष—वा क्लीवे, पक्षे स्त्रियाम् । लक्षं, लक्षा । तस्य = लक्षस्य पर्यायो—नियुतं च क्लीवे । असन्त-मिसन्तमुसन्तमनन्तञ्च द्व्यच्कं क्लीवे । पय., यश', तेजः । सर्पि., हवि । वपु., आयुः । चर्म, वर्म । कर्तृवर्जितेऽर्थे यत्—अनान्तं नाम तत् क्लीवे । गमन,

[1]त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम्।
पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥२५॥
[2]द्वन्द्वैकत्वाऽव्ययीभावौ पथः संख्याऽव्ययात्परः।
षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा॥
[3]शालार्थापि परा राजामनुष्यार्थादराजकात्।

---

दानं, हसनम्। कर्त्तरि तु—नन्दनः, रमणः। (१) त्रान्तं लोपधं,—शिष्ट = बाधकाबाधित क्लीबे। दात्रं, पात्रम्। कूलं, मूलम्। बाधके तु सति—पुत्रः, धूत्रः, मन्त्रः, कालः—इत्यादौ पुस्त्वमेव। संख्यापूर्वं रात्र क्लीबम्। त्रिरात्रं, पञ्चरात्रम्। पात्रादिभिरदन्तैरेकार्थं = समाहारे—द्विगुः—क्लीबे,—शिष्टप्रयोगात्। पञ्चपात्र, त्रिभुवनम्। असमाहारे तु पञ्चकपालः। त्रिपुरी, पञ्चमूलीत्यादौ शिष्टप्रयोगात्स्त्रीत्वमेव। (२) एकत्वे द्वन्द्वो—द्वन्द्वैकत्व = समाहारद्वन्द्वः, अव्ययीभावश्च क्लीबे। पाणिपादम्, अधिहरि। संख्याव्ययात्परः कृतसमासान्तः पथ—क्लीबे। द्विपथं, विपथम्। तत्पुरुषे षष्ठ्यन्तात्परा बहूनां छाया क्लीबे। वीनां = पक्षिणां छाया विच्छायम्। षष्ठ्यन्तात्परो यः समूहार्थक सभाशब्द-स्तदन्तस्तत्पुरुषः क्लीबे। स्त्रीसभम्। स्त्रीसमूह इत्यर्थः। (३) राजशब्द विना—राजपर्यायात्, अमनुष्यात् = रक्षःपिशाचादिवाचकाच्च षष्ठ्यन्तात्परा—शालायां

दासीसभं नृपसभं रक्षःसभमिमा दिशः ॥२७॥
[1]उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।
कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ॥२८॥
[2]भावे नणकचिद्भ्योऽन्ये समूहे भावकर्मणोः ।
अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः॥२९॥

---

समूहार्था च सभा तत्पुरुषे क्लीबे । नृपसभं, दासीसभं, पिशाचसभं, रक्ष सभमित्यादि रीत्या ज्ञेयम् । (१) उपज्ञान्त उपक्रमान्तश्च तत्पुरुषः क्लीबे, उपज्ञोपक्रमयो प्राथम्ये द्योत्ये । कस्य = प्रजापतेः—उपज्ञा कोपज्ञं—सृष्टिः । कोपक्रमं सृष्टिः ॥ षष्ठयन्तात्परा या कन्था तदन्तस्तत्पुरुषः क्लीबे,—उशीनर-देशस्थसञ्ज्ञासु चेत्सा भवति । सौशमीनां कन्था—सौशमिकन्थम् ।

(२) न—ण—केभ्योऽन्ये चकारेत्सञ्ज्ञकेभ्यश्चान्ये ये तव्यदादयः,—अदन्ताः कृत्प्रत्यया भावे विहितास्तदन्तं नाम क्लीबे । किञ्च—समूहेऽर्थे भाव कर्मार्थे अदन्तास्तद्धिता. प्रत्ययास्तदन्तं नाम क्लीबे । यथा—भूतं, भव्यं, भवनीयम्, ब्रह्मभूयं, सांराविणमित्यादि । नकाराद्यन्तास्तु यज्ञः, स्वप्न, न्यादः, विघ्न, कारणा, चयः । समूहे तद्धिता.—भैक्षं, काकं, वैदार्य, गोत्वं, मार्दवं, स्तेयम् । पुण्यसुदिनाभ्यां पर कृतसमासान्तः—अह क्लीबे । पुण्याहं, सुदिनाहम् ॥२९॥

क्रियाऽव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके ।
चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम् ॥३०॥
राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ।
माणिक्यभाष्यसिन्दूरचीरचीवरपिञ्जरम् ॥३१॥
लोकायतं हरितालं विदलं स्थालबाह्लिकम् ।

❀ इति क्लीवसंग्रहः ❀

पुंन्नपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥३२॥
मोदकस्तण्डकष्टङ्कः शाटकः कर्पटोऽर्बुदः ।

(१) क्रियाणामव्ययानाच भेदकानि क्लीवे—एकवचने च स्युः। मृदु पचति, कमनीयं प्रातः। (२) क्लीवलिङ्गानि कानि चित्कण्ठरवेणापि निर्दिशति—उक्थेति। उक्थं = सामभेदः। तोटक = छन्दोभेदः। चोच = कदलीफलम्। तिरीट = शिरोभूषणम्। योजन = चतुष्क्रोशी। काव्ये—गद्यपद्ये क्लीवे, अन्यत्र—गद्या = कथा, पद्य = एकः। चीवर = मुनिबौद्धभिक्षुवस्त्रम्। लोकायत = चार्वाकशास्त्रम्। विदल = वंशपात्रभेद [ पिटारी ]।

( ३ ) पुंनपुंसकयोरित्यधिकार। उक्तादन्य शेषः—पुंनपुंसकयोः। पिण्याक = तिलकल्कः। [ खली ]। तण्डकः = खञ्जनफेनादि। टङ्कः = पाषाणभेदनः।

पीतकोद्योगचरकतमालामलका नडः ॥३३॥
कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेम कुट्टिमम् ।
संगमं शतमानार्मं शम्बलाव्ययताण्डवम् ॥३४॥
कवियं कन्दकार्पासं पारावारं युगन्धरम् ।
यूपं प्रग्रीवपात्रीवे यूपं चमसचिक्कसौ ॥३५॥
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥३६॥

ॐ इति पुंनपुंसकसंग्रहवर्गः ॐ

स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः ।

---

(१) खर्वट = नगरसमग्राम. ['कसबा'] वरक = स्थूतवस्त्रम् । 'चरक' मित्यपि पाठः । नडः = अन्तर्विवरस्तृणभेद. । [ टठल ] बुस्तं = मांसशष्कुली, भृष्टमांसम्, पनसादिफलनिरसारभागश्च । शतमानं = रजतपलम्, अर्मम्—अक्षिरोग. । कवियं = खलीनम् । प्रग्रीव = वातायनम् । पात्रीव—यज्ञपात्रभेदः । अर्धर्चादिगणे घृतादीनामपि पाठः । परन्तु तेषां लोके क्लीबत्वमेव, पुंस्त्वं तु वेदविषयम्, अतस्तेऽत्र नोक्ताः । यदि लोकेपि तथा प्रयोगस्तर्हि शिष्टप्रयोगाद्व्यवस्था ॥३६॥ (२) 'स्त्रीपुंसयो'रित्यधिकारः । अपत्यार्थे

जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः २७
ऊर्मिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः ।
मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी २८

❀ इति स्त्रीपुंस्कशेषसङ्ग्रहः ❀

स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ।
औचित्यमौचिती मैत्री मैत्र्यं वुञ्प्रागुदाहृतः २९

---

विहिता ये— अणादयः, तदन्ता स्त्रीपुंसयो । औपगवः, औपगवी । द्विपद-चतुष्पदषट्पदवाचिनः, उरगवाचिनः, जातिविशेषाश्च स्त्रीपुंसयो. । मानुषः मानुषी । बकः बकी । हसः, हसी । सिंहः, सिंही । भ्रमर., भ्रमरी । उरगः, उरगी । अबाधिता इत्येव, नेह—मक्षिका, शिवा, लूता । जातिवाचिनः—मत्स्यः, मत्स्यो । पुरुषाख्या. स्त्रीयोगे स्त्रीपुसयोः । ब्राह्मण', ब्राह्मणी, गोपः गोपी । मल्लकादयः कुट्यन्ता' स्त्रीपुसयो. । वर्णक = लेखनसाधनम् [ वर्त्ता 'स्लेट-पेंसिल' ] झाटलिर्वृक्षभेद । मूषा = स्वर्णकारपात्रभेद' । सृपाटी—मानभेद', चञ्चुर्वा ।

( १ ) स्त्रीनपुंसकयोरित्यधिकारः । भावे कर्मणि च विहितो य —ष्यञ् वुञ, तदन्त स्त्रीक्लीबयो । औचित्यम्, औचिती । मैत्र्य मैत्री । प्राग् = द्वितीये काण्डे । आहोपुरुषिका, शैष्योपाध्यायिका । क्वचिन्न—मानोज्ञकम् ।

[1]षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः।
स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ४०
[2]आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप्।
त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ४१

❀ इति स्त्रीनपुंसकशेषः ❀

त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ।

❀ इति त्रिलिङ्गशेषसंग्रहः ❀

[3]परंलिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ॥४२॥

---

(१) षष्ठ्यन्तात्पराः सेनादयस्तत्पुरुषे स्त्रीनपुंसकयोः स्युः। नृसेनं, नृसेना, श्वनिशं, श्वनिशा, गोशालं, गोशाला। वृक्षच्छायं, वृक्षच्छाया।

(२) आबन्तोत्तरपदोऽन्नन्तोत्तरपदश्च द्विगुः—अपुंसि = स्त्रीनपुंसकयोर्भवति। अनो नकारस्य च लुप् = लोपो भवति। तिसृणां खट्वानां समाहारः—त्रिखट्वं त्रिखट्वी। त्रयाणां तक्ष्णां समाहारः—त्रितक्षं, त्रितक्षी। अत्र नलोपोऽपि।

[ 'त्रिषु' इत्यधिकृतम्—पात्रादयो दाडिमान्तास्त्रिषु लिङ्गेषु ज्ञेयाः। स्त्रीलिङ्गरूपप्रदर्शनन्तु ङ्यन्तत्व सूचनायैव। वाटी = गृहोद्यानम्। कुवलं = बदरीफलम्।

( ३ ) स्वप्रधाने = समस्यमानपदार्थप्रधाने, द्वन्द्वे = इतरेतरद्वन्द्वे,—परपदस्येव लिङ्गं भवति। तत्पुरुषेऽपि परपदस्येव लिङ्गं भवति। इमे कुक्कुटमयूर्यौ, मयूरी-

अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाःपरोपगाः ।
तद्धितार्थो द्विगुः संख्यासर्वनामतदन्तकाः॥४३॥
बहुव्रीहिरदिङ्नाम्नानुन्नेयं तदुदाहृतम् ।
गुणद्रव्यक्रियायोगोपाधिभिः परगामिनः ॥४४॥

---

कुनकुटाविमौ । कुलमाह्मण', ब्राह्मण कुलम् । सामान्यमेतत्, अस्यापवादमाह-अर्थान्ता इत्यादिना । ( १ ) तत्पुरुषे-अर्थान्ता.—परोपगा = विशेष्यनिघ्ना' द्विजार्था यवागू, द्विजार्थं पयः, द्विजार्थः सूपः । प्रादिपूर्वाः अलंप्राप्तापन्नपूर्वाश्च,-परोपगा. = विशेष्यनिघ्ना । प्रगत आचार्य-प्राचार्य, निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः । प्राप्तजीविक, आपन्नजीविकः, अल जीविकायै-अलंजीविक. । तद्धितार्थे द्विगु'-परोपग = वाच्यलिङ्गः । पञ्चसु कपालेषु संस्कृत. पुरोडाश.-पञ्चकपाल । सख्या सर्वनामानि च, संख्या सर्वनामान्ताश्च शब्दा विशेष्यनिघ्नाः । एक., एका एक, त्रय. तिस्रः, त्रीणि । सर्व, सर्वा, सर्वम् । परमत्रयः, परमतिस्र । परमसर्वः, परमसर्वा, परमसर्वम् । (२) अदिग्नाम्नां बहुव्रीहिसमासो वाच्यलिङ्गः । उदाहृतम् = उदाहरणम्, उन्नेय = ज्ञेयम् । बहुधन', बहुधना । दिङ्नाम्नान्तु-उत्तरपूर्वा । गुणद्रव्यक्रियाणां योगः उपाधि.—निमित्तं येषान्ते-गुणद्रव्यक्रियायोगोपाधयः—परगामिन. = वाच्यलिङ्गाः । शुक्ला शाटी, शुक्ल पट, शुक्लं वस्त्रम् । दण्डि, दण्डी, दण्डिनी । पाचकं, पाचिका, पाचक ।

१कृतः कर्तृसंज्ञायां कृत्याः कर्तरि कर्मणि ।
अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः॥४५॥
३षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।

(१) कर्तरि विहिता कृत.—वाच्यलिङ्गाः। परन्तु सञ्ज्ञायां विहिता वाच्यलिङ्गा न। कर्ता, कर्त्री, कर्तृ । कुम्भकारः, कुम्भकारी, कुम्भकारम् । सञ्ज्ञायान्तु धनञ्जय इत्येव । कर्तरि कर्मणि च विहिता कृत्या वाच्यलिङ्गाः । कर्तरि यत्-भव्यः, भव्या, भव्यम् । कर्मणिण्यत्—कार्यः, कार्या, कार्यम् । भावादौ तु—भवितव्यमित्येव । 'तेन रक्त रागा' दित्याद्यर्थे विहिता ये अणादयः, तदन्ताः शब्दा नानार्थाना भेदकाः = विशेषणानि । नानार्था वा भेदकाः = विशेष्यभूता-येषान्ते तथेत्यर्थः । कौङ्कुमं वस्त्र, कौङ्कुमी शाटी, कौङ्कुमः पटः । वासिष्ठ साम, वासिष्ठी ऋक्, वासिष्ठो मन्त्र । ( २ ) षट्सञ्ज्ञकाः = षान्ता नान्ताश्च संख्यावाचका, युष्मदस्मच्छब्दौ, तिङन्तानि पदानि, अव्ययञ्च—लिङ्गकृतविशेषा-भावात् त्रिषु समाः । पञ्च—नराः,—नार्य, कुलानि च । षट्—स्त्रियः, षट्—पुरुषाः, षट्—कुलानि वा । एवं सर्वत्र । लिङ्गविधायकानाम्—एषां विरोधे—पर वचनं ग्राह्यम् । यथा—'स्त्रियामीदूद्विरामैका'मित्यस्य—धी भ्रू—इत्यादौ साव काशस्य—नी लूरित्यादौ 'कृतः कर्तृसञ्ज्ञाया' मित्यनेन परत्वाद् बाधस्तेनत्रिलिङ्ग तैव । शेषम् = इह लिङ्गानुशासनेऽनुक्तं शिष्टप्रयोगाज्ज्ञातव्यम् । यथा—'चालनी तितउ. पुमां' नित्यनेन पुँल्लिङ्गत्वमात्रलाभेपि—'तितउ परिपवनं

परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥४६॥

॥ इति लिङ्गादिसंग्रहवर्गः ॥ ५ ॥

ई[1]त्यमरसिंहकृतौ नामलिङ्गानुशासने ।
सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः॥४७

❀ तृतीयं काण्डं सम्पूर्णम् ❀

---

भवती'ति महाभाष्यप्रयोगात्क्लीबलिङ्गताया अपि लाभो बोध्यः । 'कोरकः पुमा'नित्युक्तस्य माघे 'कोरकाणी'ति प्रयोगात्क्लीबताऽपि । एवमेव 'वा पुंसि पद्म'मित्यादिना पद्मस्य पुंस्त्वे उक्तेपि शिष्टैस्तथाऽप्रयोगान्न पुंसिप्रयोगो युक्तः । एवं सर्वत्रानुमन्धेयमिति । (१) इति = इत्थ अमरसिंहकृतौ = तद्रचिते, नाम लिङ्गानुशासने = अमरकोशे, तृतीयः सामान्यकाण्ड. साङ्ग = अङ्गै सहित.— समर्थित. = परिपूर्णः । इति शिवम् ।

इति श्रीपण्डितप्रकाण्ड—महमण्डलमार्तण्ड—श्रीजेहिरामशास्त्रिणां पौत्रेण,
प्रतिवादिभयङ्करभयङ्करश्रीशिवनारायणशास्त्रिणां पुत्रेण
'कविचक्रचक्रवर्त्ति' पण्डितरघुनन्दनप्रसादशास्त्रिणा-
अभ्यूदितायाममरकोशटीकायां तृतीय काण्डः ।
❀ ॐ हरि. ॐ वैशाखकृष्णा ११ । स० वैक्र० १९८४ ❀